


# मैगी क्लब में आओ – हर पल मौज मनाओ

मैगी क्लब का सदस्य बनने के लिए मैगी नूडल्स के 5 खाली पैकेटों के सामने वाले हिस्से से डिज़ाइन में छपे नाम 'Maggi 2- Minute Noodles' काटो और हमें भेज दो। तुम्हें आजीवन सदस्य बनाने के लिए हम तुम्हें एक सुन्दर मैगी क्लब सदस्यता बैज और सर्टिफिकेट भेजेंगे। साथ में नीचे लिखे उपहारों में से तुम्हारा मनपसंद कोई भी एक उपहार भी।

• मैगी स्कूल फन सेट (20 बुक लेबल और एक टाइम-टेबल) • मैगी ट्रैफिक गेम • चाइनीज़ चित्र-पहेली • मैगी पोस्टर सेट • डिज़्नी टुडे कॉमिक (हर बार नया अंक)

अगर चाहो तो पाँचों उपहार एक साथ ले सकते हो। लेकिन ध्यान रहे, हर उपहार के लिए 5 पैकेटों से 'Maggi 2-Minute Noodles' काटकर भेजना ज़रूरी है।

सिर्फ इतना ही नहीं! मैगी क्लब में हम समय-समय पर तुम्हारे लिए कई रोचक चीज़ें पेश करते रहेंगे। इसलिए जल्दी करो और आज ही मैगी क्लब में शामिल हो जाओ।




याद रखो:
कटे हुए नामों को 60 पैसे के टिकट वाले लिफ़ाफ़े में डालकर एक कागज़ पर नीचे दिए विवरण के साथ हमें भेज दो:
नाम, पूरा पता, उम्र लड़का/लड़की,
कितने कटे हुए नाम भेजे हैं: कौन सा उपहार चाहिए:
अपना पत्र इस पते पर भेजो:
मैगी क्लब, पोस्ट बॉक्स नं. 5783, नई दिल्ली-110 055



# गणविभागः

शिष्यः- श्रीमन्! 'पठति', इत्यत्र पठ् इति धातुः अस्ति एव। अन्ये के के अंशाः तत्र भवन्ति?

आचार्यः- पठति इत्यत्र अंशत्रयम् अस्ति – पठ् + अ + ति इति। 'पठ्' इति धातुः, 'अ' इति विकरणप्रत्ययः, 'ति' इति आख्यातप्रत्ययः।

शि - तयोः प्रत्यययोः किं वैशिष्ट्यम्?

आ - आख्यातप्रत्ययाः लकारान् बोधयन्ति।

शि - लकाराः नाम?

आ - भूत-भविष्यद्-वर्तमानकालान् प्रार्थना-विध्याद्यर्थान् च बोधयितुं पाणिनिः 'लट्, लिट्, लुट् ...' इत्यादीः संज्ञाः स्वीकृतवान्। एकैका संज्ञा एकैकम् अर्थं बोधयति। तेषां सर्वेषाम् आदौ 'ल्' अस्ति इत्यतः ते लकाराः इति उच्यन्ते।

शि - एवं तर्हि 'ति' स्थाने ये प्रत्ययाः भवन्ति तेषाम् आधारेण वयं कालं प्रार्थनाद्यर्थं वा ज्ञातुं शक्नुमः।

आ - तेषां प्रत्ययानाम् आधारेण एव पुरुषभेदाः, वचनभेदाः, पदिभेदाः (आ.प., प.प.इ.) च ज्ञायन्ते।

शि - विकरणप्रत्ययानां किं वैशिष्ट्यम्?

आ - विकरणप्रत्ययाः गणं निर्दिशन्ति।

शि - गणाः नाम?

आ - सामान्यतः २००० मूलधातवः सन्ति इति मया इतः पूर्वम् उक्तं खलु? ते समानाकारकाः न। पाणिनिः रूपसाम्यस्य आधारेण तान् धातून् दशधा

विभक्तवान्। ततः दश गणाः जाताः। ते च गणाः प्रथमद्वितीयादिनामभिः भ्वाद्यदादिप्रभृतिभिः नामभिः वा आहूयन्ते। अयं च सङ्ग्रहश्लोकः—

> भ्वा[1]द्य[2]दा[3]दी जु[3]होत्यादिः दि[4]वादिः स्वा[5]दिरेव च।
>
> तु[6]दादिश्च रु[7]धादिश्च त[8]नु-क्र्[9]यादि-चु[10]रादयः।।

शि - तत्तद्गणस्य आदौ यः धातुः भवति स च गणः तदादिनाम्ना व्यवह्रियते खलु?

आ - आम्। अतः विकरणप्रत्ययं दृष्ट्वा कः धातुः कस्मिन् गणे प्रविष्टः इति ज्ञातुं शक्नुमः।

शि - कस्य गणस्य कः विकरणप्रत्ययः इत्यपि वदतु तावत्।

आ - तद्यथा—

| गणनाम | | धातुः | विकरणप्रत्ययः | लटि रूपम् |
|---|---|---|---|---|
| प्रथमः | भ्वादिः | भू—सत्तायाम् | अ (शप्) | भवति |
| द्वितीयः | अदादिः | अद—भक्षणे | — (लुक्) | अत्ति |
| तृतीयः | जुहोत्यादिः | हु—दानादानयोः | — (श्लु) | जुहोति |
| चतुर्थः | दिवादिः | दिवु—क्रीडादिषु | य (श्यन्) | दीव्यति |
| पञ्चमः | स्वादिः | षुञ्—अभिषवे | नु (श्नुः) | सुनोति |
| षष्ठः | तुदादिः | तुद—व्यथने | अ (शः) | तुदति |
| सप्तमः | रुधादिः | रुधिर्—आवरणे | न (श्नम्) | रुणद्धि |
| अष्टमः | तनादिः | तनु—विस्तारे | उ | तनोति |
| नवमः | क्र्यादिः | क्रीञ्—द्रव्यविनिमये | ना (श्ना) | क्रीणाति |
| दशमः | चुरादिः | चुर—स्तेये | अय (णिच् + शप्) | चोरयति |

एतेषु दशसु गणेषु प्रथमः, चतुर्थः, षष्ठः, दशमः च प्रसिद्धाः। तेषां चतुर्णाम् अपि अभिज्ञानं सुलभं, यतः रूपसाम्यं भवति। अधिकाः धातवः एतेषु चतुर्षु एव अन्तर्भवन्ति। इतरेषु गणेषु स्थिताः धातवः अल्पसङ्ख्याकाः। तेषु अपि प्रसिद्धाः प्रायः अङ्गुलिगणनासाध्याः।




# चन्दमामा

संस्थापकः– 'चक्रपाणिः'  सञ्चालकः– 'नागिरेड्डी'

एषु दिनेषु संस्कृतसम्भाषणासक्ताः सम्भाषणशीलाः च बहवः दृश्यन्ते। किन्तु यदा निरर्गलतया वक्तुं शक्नुवन्ति तदा तत्रैव तृप्ताः भवन्ति ते। शुद्धताविषये विशेषतः न चिन्तयन्ति। संस्कृताध्यापनेन एव जीवत्सु अध्यापकेषु अपि शुद्धताविषये अनादरः दृश्यते! किमर्थम् एवं भवति?

निरर्गलता केवलेन उत्साहेन अपि प्राप्यते। किन्तु शुद्धता न तथा। सा च वक्तुः (प्रयोक्तुः वा) परिश्रमम् अपि अपेक्षते। निरन्तरपरिश्रमेण विना शुद्धताप्राप्तिः असाध्या एव। अतः एव बहवः शुद्धतायां प्रवृत्तिमन्तः न दृश्यन्ते। निरर्गलतारूपी घट्टः आरूढः मया इति तृप्तिः अपि अत्र अन्यत् कारणं भवितुम् अर्हति। तृप्तस्य अन्यत्र प्रवृत्तिः न भवति खलु प्रायः?

निरर्गलता शुद्धता चापि व्यवहारस्य प्रधानम् अङ्गद्वयम्। अनयोः अन्यतरस्य केवलस्य प्राप्त्या व्यवहारः न सिध्यति। एषः अंशः व्यवहारशीलैः कदापि न विस्मरणीयः। निरर्गलतायाः अनन्तरं शुद्धता अपि यदा प्राप्यते तदा एव पूर्णतः व्यवहारस्य सिद्धिः।

अतः उत्साहधनाः भोः निरर्गलभाषिणः! शुद्धता अपि भवद्भिः प्राप्तव्या अस्ति इत्येतम् अंशं सदा स्मरन्तु।

सम्पुटः–५  अगस्ट्–१९८८  सञ्चिका–५

प्रतिकृतिमूल्यं रू. २-५०  •  वार्षिकं ग्राहकशुल्कं रू. ३०-००





# Lakhani



**Study time.... Play time.... Any time....**

**Lakhani Canvas Shoes**

For comfort, easy wear and long-lasting quality.



Super Joy Super Tennis Samrat Target Nicky




***We think quality... we make quality... you get quality.***

# रसवार्ता:



## नक्षत्ररेणुभिः स्नानम्!

१९८७ तमे वत्सरे भूमिवासिनः सर्वे नक्षत्ररेणुभिः स्नाताः अभवन्। अन्तरिक्षे स्फुटितात् नक्षत्रात् एते रेणवः भूमौ व्यापकतया विकीर्णाः आसन्।

## भूकम्पनानि!

१९८७ तमे वत्सरे प्रपञ्चे सामान्यतः ७६ महाभूकम्पनानि प्रवृत्तानि। कोलम्बिया-ईक्वडार्प्रान्ते प्रवृत्तं भूकम्पनम् एव तेषु भयङ्करम् इति भाव्यते। एतस्मात् भूकम्पतः सहस्राधिकाः जनाः प्राणान् त्यक्तवन्तः।






## अपूर्वं हस्ताङ्कनम्!

लण्डन्नगरे 'डाक् वैट् हेड्' नाम्ना वित्तकोषे एकम् एकौण्ट् आरब्धम्। 'वित्तकोषे एतादृशाः व्यवहाराः प्रतिदिनं शतशः भवेयुः, अतः अत्र किम् आश्चर्यम्?' इति पृच्छन्ति वा? वस्तुतः एतत् एकौण्ट् विशिष्टम् अस्ति। एतत् एकौण्ट् आरब्धवान् डाक् वैट् हेड् वस्तुतः न मानवः, अपि तु शुनकः। सः स्वकीयस्य अग्रिमपादस्य मुद्राम् अङ्कयित्वा वित्तकोषतः धनं प्राप्नोति!

## शान्तिज्वाला

१९४५ तमे वत्सरे अगस्ट्मासे हिरोषिमानगरे प्रवृत्तात् अणुस्फोटकाक्रमणात् सङ्गृहीता ज्वाला ऐक्यराज्यसमितेः समावेशं प्रति एषु दिनेषु प्रेषिता। निरव्वस्त्रीकरणविषये ऐक्यराज्यसमितेः प्रतिनिधयः अत्र समुपस्थिताः आसन्। 'अणुयुद्धतः कीदृशः घोरः परिणामः सम्पद्यते' इत्येतम् अंशं स्मारयितुम् एषा शान्तिज्वाला प्रेषिता आसीत्।



# सुलभः मार्गः

कश्चन भूस्वामी स्वभवनस्य स्वागतप्रकोष्ठस्य मुख्यद्वारस्य उभयपार्श्वे अपि गजस्य शिल्पं निर्माय स्थापनीयम् इति आलोच्य नागराजनामकं शिल्पिनम् आहूतवान्।

नागराजः स्वशिष्येण फणिभूषणेन सह भूस्वामिनः गृहम् आगतवान्।

भूस्वामिनः अपेक्षां श्रुत्वा सः उक्तवान्– ''एतस्य कार्यस्य समापनार्थं मासात्मकः अवधिः अपेक्षितः'' इति।

तदा भूस्वामिनः पार्श्वे स्थितः तदीयः साहाय्यकः उक्तवान्– ''मासात्मकः अवधिः! एतादृशाः सर्वदा एवम् एव। कार्यव्याजेन दिनानि यापयन्तः वृथा अवधिं दीर्घीकुर्वन्ति'' इति।

एतद्विषये प्रतिक्रियां कामपि प्रदर्शयितुम् अनिच्छन् नागराजः मौनं स्थितवान्।

तदा फणिभूषणः पदद्वयम् अग्रे आगत्य उक्तवान्– ''श्रीमन्, अस्माकं गुरुः शिल्पकार्ये सुलभं मार्गं न जानाति। भवान् प्रथमम् गजोन्नतां शिलाम् आनाययतु'' इति।

''शिलाम् आनाययामि। किन्तु कार्यसमापनार्थं भवद्दृष्ट्या कियान् कालः अपेक्षितः?'' इति पृष्टवान् साहाय्यकः।

''गजशिल्पार्थं ये भागाः अनपेक्षिताः तेषां निष्कासनं तु अल्पे एव काले भवेत्'' इति उत्तरं दत्तवान् फणिभूषणः।

तदा भूस्वामी उक्तवान्– ''अहं तु सुन्दरं शिल्पम् इच्छामि, न तु शीघ्रसमापनम्। सुन्दरतया गजशिल्पस्य निर्माणार्थं धनस्य कालस्य च व्ययः यावत् अपि भवतु नाम'' इति।

एतत् श्रुत्वा भूस्वामिसाहाय्यकः मौनं शिरः अवनमय्य स्थितवान्।





# मुग्धस्य कोपः

सूर्यशेखरः नाम युवकः स्वभावेन अतीव मुग्धः। कपटं नाम्ना अपि न जानाति। तदीयः पिता स्वमरणतः पूर्वम् उक्तवान् आसीत् – "पुत्र! श्रमेण कार्यं कुर्वन् धनं सम्पादयतु। कदापि कोऽपि न याचनीयः। सदा भगवति विश्वासः भवतु। तस्य दयया भवान् परिश्रमानुगुणं फलं प्राप्स्यति एव। ये भवद्विषये अन्याय्यम् आचरन्ति ते भवतः शापेन पीडिताः भविष्यन्ति। एतानि मम वचनानि कदापि मा विस्मरतु" इति।

सूर्यशेखरः पितुः वचनं भक्त्या श्रुतवान्। पितुः मरणानन्तरं तथैव आचरितवान् अपि। क्रमपि अखेदयन् सः यथाशक्ति परोपकारं कुर्वन् विश्वासार्हः इति, सज्जनः इति च ख्यातिं प्राप्तवान्।

बहवः तस्य साहाय्यं स्वीकुर्वन्ति, किन्तु परिश्रमानुगुणं धनं न यच्छन्ति। धनविषये एषः तु कदापि निर्बन्धं न करोति। अतः तस्य दैनन्दिनजीवनं निर्विघ्नं प्रचलति चेदपि धनसङ्ग्रहणं तु न भवति। यावत् प्राप्यते तावत् व्ययितं भवति।

एवं स्थिते सः कदाचित् अस्वस्थः अभवत्। चिकित्सार्थं वैद्यसमीपं गतवान् सः। तं दृष्ट्वा वैद्यः उक्तवान् – "प्रथमं धनम् आनयतु। अनन्तरं चिकित्सा" इति।

तदा सूर्यशेखरः दैन्येन उक्तवान् – "श्रीमन्! मम समीपे वराटिकामितं धनम् अपि नास्ति। इदानीं भवान् चिकित्सां करोतु। यदा स्वस्थः भविष्यामि तदा भवदीयं कार्यं कुर्वन् ऋणं प्रत्यर्पयिष्यामि" इति।

किन्तु वैद्यः एतत् न अङ्गीकृतवान्। सूर्यशेखरः किङ्कर्तव्यतामूढः सन् खेदेन गृहं प्रत्यागतवान्।

अत्र प्रवृत्तं सर्वं वैद्यस्य पुत्री पद्मिनी



दृष्टवती आसीत्। सा सूर्यशेखरम् अनुसृत्य गत्वा उक्तवती – "मम पिता इतः पूर्वं बहुवारं भवद्द्वारा बहूनि कार्याणि कारितवान् खलु? किन्तु कदापि श्रमानुगुणं धनं न दत्तवान्। स च विषयः तस्य पुरतः वक्तव्यः आसीत्। किमर्थं भवान् मौनं स्थितवान्?" इति।

तदा सूर्यशेखरः स्वपितुः उपदेशं तां श्रावितवान्। एतत् श्रुत्वा पद्मिनी उक्तवती – "भवान् तु सर्वथा मुग्धः। एवं चेत् जीवने कष्टानि एव अधिकानि भवेयुः। पौरुषेण जीवतु, यतः भवान् पुरुषः। जीवने धाष्टर्यम् अपि अपेक्षितम्" इति।

तदा सूर्यशेखरः मुग्धस्वरेण उक्तवान् – "भवत्याः वचनानुसारं भवत्याः पितुः सम्मुखीकरणेन समस्या परिहृता न भविष्यति। प्रतिदिनम् एवं मां कः बोधयेत्? यदि कोऽपि बोधयेत् तर्हि एव धाष्टर्यं प्रदर्शयितुं मम धैर्यं भवेत्। अज्ञाते विषये प्रवृत्तिः अपायकारिणी खलु?" इति।

"एवं तर्हि भवान् मां परिणयतु। आजीवनम् उत्तमाः सूचनाः दास्यामि" इति उक्तवती पद्मिनी।

"भवत्याः पिता एतं प्रस्तावम् अङ्गीकुर्यात् वा?" इति सन्देहं प्रकटितवान् सूर्यशेखरः।

"सः निश्चयेन अङ्गीकरिष्यति। किन्तु ततः पूर्वं भवान् स्वस्थः भवेत् खलु? अहम् इदानीं मदीयं सुवर्णवलयद्वयं भवते दास्यामि। भवान् 'एतत् द्वयं मम मात्रा दत्तम् आसीत्' इति उक्त्वा मम पित्रे ददातु। तदा पिता चिकित्सां करिष्यति। यदा स्वस्थः भविष्यति तदा मम परिणये इच्छां प्रकटयतु। सः निश्चयेन अङ्गीकरिष्यति" इति उक्त्वा स्वहस्ते स्थितं वलयद्वयं निष्कास्य सूर्यशेखरस्य हस्ते दत्तवती पद्मिनी।

"भवत्याः व्यवहारः एव विचित्रः अस्ति। वस्तुतः अपि मयि प्रीतिमती वा भवती?" इति आश्चर्येण पृष्टवान् सूर्यशेखरः।

"यदि प्रीतिमती न स्यां तर्हि सुवर्णवलयद्वयं कुतो वा दद्याम्? इतः परम् अहं भवदीया एव" इति मन्दहासपूर्वकम्

उक्तवती पद्मिनी।

सूर्यशेखरः पद्मिन्या दत्तं वलयद्वयं स्वीकृत्य वैद्यसमीपं गत्वा पद्मिनी यथा सूचितवती तथैव उक्तवान्। सुवर्णवलयस्य दर्शनेन वैद्यस्य मुखं विकसितम् अभवत्। 'जागरूकतया रक्षतु' इति उक्त्वा तत् वलयद्वयं पुत्र्याः हस्ते स्थापितवान् वैद्यः।

पद्मिनी तत् स्वीकृत्य अन्तः गतवती। अनन्तरदिने एव यथापूर्वं हस्ते धृतवती च।

वैद्यः सूर्यशेखरं स्वगृहे स्थापयित्वा सम्यक् चिकित्सां कृतवान्। अष्टसु दिनेषु सूर्यशेखरः पूर्णतः स्वस्थः जातः।

"सूर्यशेखर! इतः परं भवान् स्वगृहं गन्तुम् अर्हति" इति उक्तवान् वैद्यः।

"भवतः पुत्रीं परिणेतुम् इच्छामि श्रीमन्!" इति सङ्कोचेन उक्तवान् सूर्यशेखरः।

"भवान् परिणेतुम् इच्छति, तत्रापि मम पुत्रीम्? किं, पत्नीं सम्यक् पोषयितुं सामर्थ्यम् अस्ति वा भवतः?" इति कोपमिश्रितेन स्वरेण पृष्टवान् वैद्यः।

"भवतः पुत्री पद्मिनी बुद्धिमती। सा यदि मया सह स्यात् तर्हि अहं यत्किमपि साधयितुं शक्नुयाम्" इति उक्तवान् सूर्यशेखरः।

"मम पुत्री बुद्धिमती इति अहं जानामि एव। तादृशी बुद्धिमती भवन्तं परिणेतुं न इच्छेत् इति अजानन् भवान् तु मूर्खः एव" इति उक्तवान् वैद्यः।

"भवता अन्यथा गृहीतम्। पद्मिनी मयि



आसक्ता अस्ति इति ज्ञात्वा एव अहं भवन्तं पृष्टवान्। सा मयि प्रीतिमती यदि न स्यात् तर्हि कुतो वा मह्यं स्वसुवर्णवलयद्वयं दद्यात्?" इति मुग्धस्वरेण उक्तवान् सूर्यशेखरः।

सूर्यशेखरेण दत्तं वलयद्वयं पुत्र्या दत्तम् एव इति ज्ञात्वा वैद्यः "हा हन्त!" इति उच्चैः उद्गारं कृतवान्। पुत्रीं स्वसमीपम् आहूय – "एषः यत् वदति तत् सत्यं वा?" इति पृष्टवान् च।

तदा पद्मिनी उक्तवती – "सूर्यशेखरः इतः पूर्वम् अस्माकं गृहे बहुवारं कार्यं कृतवान्। भवता तु कार्यानुगुणं प्रतिफलं न दत्तम्। अतः एव अहं मदीयं सुवर्णवलयद्वयं दत्तवती" इति।



पुत्रीं किमपि वक्तुम् अशक्तः वैद्यः सूर्यशेखरम् उक्तवान् – "भोः! भवान् मां वञ्चितवान्! पूर्वं यथा उक्तवान् तदनुगुणं कार्यं कुर्वन् मह्यं दातव्यं ऋणं प्रत्यर्पयतु" इति।

सूर्यशेखरः वैद्यस्य प्रस्तावम् अनिवार्यतया अङ्गीकृतवान्। तदा वैद्यः सूर्यशेखरम् उक्तवान् – "भोः, मम गृहस्य पृष्ठतः एकः कूपः अस्ति। स च कूपः मृत्तिकया भवता पूरणीयः। एतदर्थं भवतः गृहस्य पार्श्वे भवता कूपः खननीयः। अन्यस्य साहाय्यं कदापि न स्वीकरणीयम्। आत्मनः उदरपूरणव्यवस्था अपि भवता स्वयं द्रष्टव्या" इति।

"श्रीमन्! एतत् कष्टसाध्यं कार्यम्। अतः कृपया अन्यत् कार्यं वदतु, करोमि" इति निवेदितवान् सूर्यशेखरः।

"भवान् मां वञ्चयित्वा मत्तः चिकित्सां कारितवान्। भोजनादिकम् अपि मम गृहे एव प्राचलत्। अतः एव एतादृशं कठिनं कार्यं मया उक्तम्। यदि एतत् न शक्येत तर्हि चत्वारि सुवर्णनाणकानि आनीय ददातु" इति वैद्यः कठोरस्वरेण उक्तवान्।

'सुवर्णनाणकानि आनेतुं न शक्यते' इति आलोच्य सूर्यशेखरः स्वगृहस्य पार्श्वे कूपं खनन् प्राप्तां मृत्तिकां वैद्यस्य कूपे पातयितुम् आरब्धवान्। वैद्यस्य गृहं तु सूर्यशेखरस्य गृहात् बहुदूरे अस्ति। तथापि महता परिश्रमेण सः मृत्तिकां नीत्वा पातयति।

दिने दिने सूर्यशेखरस्य कूपस्य गभीरता वर्धते, किन्तु वैद्यस्य कूपः तु यथापूर्वं दृश्यते। सर्वे सूर्यशेखरस्य दयनीयाम् अवस्थां दृष्ट्वा अनुतापं प्रदर्शयन्तः वैद्यं निन्दन्ति स्म। किन्तु वैद्यः तु अविचलः एव आसीत्।

ग्रामस्थाः केचन सूर्यशेखरं सूचितवन्तः – "भोः मूर्ख! एतादृशेन कार्येण वृथा श्रमहानिः। एतत् निरर्थकं कार्यं त्यजतु। वैद्यः किमपि कर्तुं न शक्नोति" इति।

तदा सूर्यशेखरः उक्तवान् – "वैद्यः मद्विषये किमपि अन्याय्यं कर्तुम् इच्छेत् तर्हि सः एव तस्य फलम् अनुभवेत्। अहं तु वञ्चनादिकं किमपि न इच्छामि। यथा वचनं दत्तं तथा कार्यं करिष्यामि एव" इति।

एवम् एव दिनानि अतीतानि। ये सूर्यशेखरविषये करुणावन्तः ते तम् आहूय भोजनं यच्छन्ति। सूर्यशेखरः तु प्रतिदिनम् अपि अविश्रान्ततया वैद्यस्य कूपस्य पूरणे उद्युक्तः भवति।

एकदा यदा सः स्वगृहस्य पार्श्वे कूपं खनन् आसीत् तदा 'खणाल्' इति शब्दः तेन श्रुतः। सः खननकार्यं परित्यज्य तत् स्थलं सुपरीक्ष्य दृष्टवान्। तेन तत्र ताम्रपात्रद्वयं प्राप्तम्। द्वयोः अपि अन्तः सुवर्णनाणकानि आसन्। एतत् दृष्ट्वा सूर्यशेखरः अतीव आनन्दितः अभवत्।



सः पात्रतः मुष्टिमितानि नाणकानि स्वीकृत्य वैद्यस्य गृहं गतवान्। तत्र वैद्यः न आसीत्। केवलं पद्मिनी आसीत्।

सूर्यशेखरः पद्मिन्यै प्रवृत्तं सर्वं निवेद्य उक्तवान् – "पश्यतु, मम श्रमः व्यर्थः न जातः। श्रमानुगुणं फलं प्राप्तं मया" इति।

"एवं तर्हि इतः परं भवता मम गृहस्य कूपः पूरणीयः नास्ति। चत्वारि सुवर्णनाणकानि मम हस्ते दत्त्वा गच्छतु। अहं पितुः आगमनानन्तरं सर्वं निवेदयिष्यामि। भवता सुवर्णनाणकैः पूर्णं ताम्रपात्रद्वयं प्राप्तं इति श्रुत्वैव मम परिणयं प्रार्थयन् पिता भवतः गृहम् आगमिष्यति। इदानीं भवान् गच्छतु" इति सन्तोषेण उक्तवती पद्मिनी।

कुत्रापि गतः वैद्यः दिनद्वयानन्तरं प्रत्यागतवान्। सः व्रणितः श्रान्तः जीवच्छवत्वं प्राप्तवान् च आसीत्।

प्रवृत्तं तु एतावत् – वैद्यः मूलसङ्ग्रहणार्थं नैमिषारण्यं गतवान् आसीत्। तत्र केनचित् भल्लूकेन अनुधाव्यमानः सः भीत्या धावन् काञ्चित् गुहां प्रविष्टवान्। गुहायां तु चत्वारः चोराः चोरितानां वस्तूनां विभागे निरताः आसन्।

ते झटिति प्रविष्टवन्तं वैद्यं संशयदृष्ट्या पश्यन्तः सम्यक् ताडितवन्तः। 'सः राजभटः न' इति ज्ञात्वा तं परिचर्यायां नियोजितवन्तः। दिनद्वयं यावत् वैद्येन तेषां निमित्तं पाकः, तेषां वस्त्रक्षालनं, तेषां पादमर्दनम् इत्यादिकं करणीयम् आपतितम्। सः स्वदौर्भाग्यं स्मरन् रोदिति।



ते चोराः तस्य विमोचनात् पूर्वं पुनः एकवारं सम्यक् ताडयित्वा – "अस्माकं विषये कुत्रापि किमपि न वक्तव्यम्। तथा उक्तं चेत् अस्माकं न काऽपि हानिः, किन्तु भवतः परिस्थितिः शोचनीया भवेत्। स्मरतु" इति भाययित्वा ततः गतवन्तः।

जीवच्छवत्वं प्राप्तवन्तं वैद्यं द्रष्टुं ग्रामीणाः सर्वे आगतवन्तः। प्रवृत्तं सर्वं ज्ञात्वा एकः ग्रामज्येष्ठः उक्तवान्– "भवान् अदृष्टशाली एव। यतः सामान्यतः चोराः स्ववशे आगतं जनं सजीवं न परित्यजन्ति। शाश्वतरूपेण दासं कुर्वन्ति, मारयन्ति वा। अतः भवान् भाग्यशाली" इति।

तदा अपरः – "अहं वदामि सूर्यशेखरविषये यत् अन्याय्यम् आचरितं तस्य फलम् एतत् इति। यः भगवद्भक्तः सः श्रमानुगुणं फलं प्राप्नोति एव। सूर्यशेखरस्य पित्रा यथा सूचितं तथैव प्रवृत्तम्। सूर्यशेखरपीडनरूपस्य शापस्य फलम् एव एतत्" इति वदन् सूर्यशेखरेण प्राप्तम् ऐश्वर्यम् अपि निवेदितवान्।

तदा वैद्यः – "एवं वा? भवतः वचनं सत्यम् एव। मया सूर्यशेखरविषये अन्याय्यम् आचरितम्। तस्य परिहाररूपेण मम पुत्रीं तस्मै दत्वा पापात् मुक्तः भविष्यामि। कुत्र अस्ति सः सूर्यशेखरः?" इति वदन् इतस्ततः दृष्टवान्।

सूर्यशेखरः तत्र सम्मिलितानां मध्ये कुत्रापि आसीत्। भूमौ उपविश्य सोरस्ताडं रोदनं कुर्वन् अस्ति सः। सः किमर्थं रोदिति इति कोऽपि न जानाति। सर्वे तस्य सान्त्वने मग्नाः आसन्।

स्वशापेन वैद्यः पीडितः अभवत् इति खेदेन रोदिति इति केचन वदन्ति। पद्मिनीं परिणेतुम् अनिच्छन्, वक्तुं च अशक्नुवन् सः रोदिति इति अन्ये केचन वदन्ति। रोदनस्य वास्तविकं कारणं कोऽपि न जानाति। रोदनं स्थगितं चेदेव खलु कारणं कोऽपि जानीयात्? नीरसताम् अनुभूय जनाः एकैकशः ततः निर्गतवन्तः। अन्ते सूर्यशेखरः, पद्मिनी, वैद्यः च अवशिष्टाः।

"किमर्थं रोदनम्? समीपे अरण्ये

महाचोराः सन्ति, ते भवता प्राप्तानि सुवर्णनाणकानि अपहरेयुः इति भीतिः वा?'' इति पृष्टवती पद्मिनी।

''तथा किमपि नास्ति। भवत्याः पित्रा यत् कष्टं प्राप्तं तत्र मम शापः एव कारणम् इति जनाः वदन्ति खलु? तत् श्रुत्वा रोदिमि'' इति सगद्गदम् उक्तवान् सूर्यशेखरः।

''जनाः वदन्तु नाम। जनाः किं किं न वदन्ति? तेषां वचनेषु विशेषतात्पर्यं न भवेत्। अन्यच्च तैः उच्यमानेषु वचनेषु सत्यांशः सर्वथा नास्ति इति न। भवान् मां न शप्तवान् स्यात्, तथापि भवद्विषये यत् अन्याय्यम् आचरितं तस्य फलं तु अनुभोक्तव्यम् एव आसीत्। तत् फलं प्राप्तं मया'' इति वैद्यः सान्त्वनस्वरेण उक्तवान्।

''एवं तर्हि भवता यत् कृतं तस्य एतावत् एव दण्डनं वा?'' इति मुग्धस्वरेण पृष्टवान् सूर्यशेखरः।

इदानीं सूर्यशेखरस्य रोदनस्य वास्तविकं कारणं ज्ञातवती पद्मिनी हसितवती। वैद्यस्य मुखं कृष्णवर्णीयं जातम्।

तदा पद्मिनी उक्तवती – ''तात! एषः सूर्यशेखरः परोपकारं केवलं जानाति, न कदापि परपीडनम्। तादृशः सज्जनः एषः चिन्तयति यत् कार्यानुगुणं भवता पर्याप्तमात्रेण फलं न प्राप्तम् इति। एतावता एव ज्ञायते यत् भवता मुग्धस्य मनः कियत् क्लेशितम् इति। निष्कपटिनः अनुतापः व्यर्थः न भवति। सः भवन्तं तदा तदा पीडयेत् एव। अतः सर्वप्रथमं भवता सूर्यशेखरस्य मनसि स्थितः तापः निवारणीयः'' इति।

इदानीं वैद्यः आत्मनः दोषान् सम्यक् ज्ञात्वा तान् मुखतः वदन् सूर्यशेखरं क्षमां प्रार्थितवान्। ''इतः परं कदापि भवतः अहितं चिन्तयिष्यामि'' इति उक्तवान् अपि। एतेन सूर्यशेखरस्य खेदः अपगतः। सः निर्मलहासं प्रदर्शितवान्।

अनन्तरं सूर्यशेखर-पद्मिन्योः विवाहः यथाविधि सम्पन्नः। वैद्यः एतौ च सुखेन जीवितवन्तः।



# कालक्षेपः

रामेश्वरं प्रति प्रस्थितैः यात्रिकैः सह द्वौ युवकौ अपि आस्ताम्। तयोः प्रथमः द्वितीयं पृष्टवान्– "कुतः आगतवान् भवान्?" इति।

"कमलापुरतः" इति उक्तवान् द्वितीयः।

"एवं वा! मम अपि स एव ग्रामः। तत्र भवान् कस्मिन् मार्गे निवसति?" इति पृष्टवान् प्रथमः।

"जगदम्बावीथ्याम्" इति उक्तवान् द्वितीयः।

"अये! किमिदं विचित्रम्! मम गृहम् अपि तत्रैव। तत्र कस्मिन् पार्श्वे भवतः गृहम्" इति पृष्टवान् प्रथमः।

"आलयस्य दक्षिणतः द्वितीयं गृहम्" इति उक्तवान् द्वितीयः।

"मम अपि तदेव गृहम्" इति उक्तवान् प्रथमः।

तदा अन्ये यात्रिकाः आश्चर्येण तौ पृष्टवन्तः– "किमिदं विचित्रम्! भवतोः ग्रामः, मार्गः, गृहं च अभिन्नम्। तथापि अपरिचितौ इव सम्भाषणं कुरुतः किल! किम् एतत्?" इति।

"आवां न अपरिचितौ। सहोदरौ आवाम्। तथापि दूरप्रयाणे कालक्षेपार्थं एवं सम्भाषणं कृतवन्तौ। सम्भाषणार्थं कोऽपि विषयः अपेक्षितः खलु?" इति उक्तवन्तौ तौ।

तयोः एतादृशं व्यवहारं दृष्ट्वा सर्वे यात्रिकाः हसितवन्तः। "पश्यन्तु! सर्वेषां मनोविनोदस्यापि कारणम् अभवत् आवयोः सम्भाषणम्" इति वदन्तौ तौ अपि तैः सह हसितवन्तौ।





# सुवर्णखनी

## ८

[ज्ञानभूमितः प्रस्थितः विनोदः नूतनं प्रदेशं प्राप्य मुनीश्वरेण सह अदृश्यरूपेण नगरे सञ्चारं कृतवान्। तत्रत्यानां धनाशाम् अज्ञानं च दृष्ट्वा सः अतीव खिन्नः। मुनिना सृष्टम् अपूर्वं कलिङ्गफलं विभक्तं सत् जनानाम् उपरि अपतत्। जनाः कलिङ्गखण्डान् पूर्णतः खादितवन्तः। विनोदः मुनीश्वरः च तत् नगरं परित्यज्य सुदूरं प्रस्थितवन्तौ। तदनन्तरम् ......]

जलपातम् अतिक्रम्य विनोदस्य गमनानन्तरं कानिचन दिनानि अतीतानि आसन्। किन्तु सुवर्णखनीराजः भावयति स्म यत् महान् कालः अतीतः इति। विनोदः कदा वा प्रत्यागच्छेत् इति प्रतीक्षमाणः सः प्रतिक्षणम् अपि गणयति। पर्वतशिखिरे वृक्षेषु च तेन भटाः स्थापिताः आसन्। विनोदस्य प्रत्यागमनम् अविलम्बेन सूचनीयम् इति आदिष्टाः आसन् ते।

राजा यदा भोजनार्थम् उपविशति, तत्रापि विशिष्य लड्डुकं पश्यति तदा सुवर्णमयं स्त्रीविग्रहम् अवश्यं स्मरति। तदा सः क्रियमाणं भोजनम् अपि विस्मृत्य, दर्शनयोग्येन वेषेण न अस्मि इत्येतम् अंशम् अपि विस्मरन् पर्वतम् आरुह्य सुवर्णविग्रहस्य समीपं गच्छति। तदा सः मया भोजनं पूर्णतः न कृतम् इति स्मरति, खेदम् अनुभवति च। एवम् अर्धं सेवितान्



भोजनपदार्थान् विग्रहसमीपं रजतस्थालिकाभिःआनेतुं तेन त्रिंशत् सेवकाः विशेषतः नियुक्ताः आसन्।

राजा तदा तदा मन्त्रिणः महाज्ञानिनः च पश्यन् मुखम् उन्नीय उरः विस्तार्य सगर्वं पृच्छति – "भोः, इदानीम् अहं कथं दृश्ये? वदन्तु तावत्" इति।

सुन्दरतां प्राप्तुं महाराजेन क्रियमाणाः प्रयत्नाः तैः सर्वैः ज्ञायते एव। सः पूर्वापेक्षया अपि द्विगुणितम् आहारं सेवते। स्वीकृतः आहारः जीर्णः यथा भवेत् तथा अङ्गमर्दनं कारयति। स्वच्छं नवनीतं विलिप्य स्नानं करोति। दिनत्रये एकवारं विशेषकेशालङ्कारं कारयति। कण्ठे वज्रखचिताः हाराः सदा विराजन्ते। यदि कदाचित् स्त्रीविग्रहः सजीवः भवेत् तर्हि सा परिणेतव्या खलु? तदर्थम् एषः प्रयत्नः तस्य।

"प्रभो! अहो सौन्दर्यम्! भवतः सौन्दर्यं वर्णनातीतम् अस्ति महाप्रभो! विशिष्टा कान्तिः भवतः शरीरे दृश्यते चण्डप्रचण्ड महाराज! भवान् इदानीं साक्षात् मन्मथः एव। पुरुषोत्तमः भवान् भूलोकस्य देवेन्द्रः!" इति वदन्ति स्म मन्त्रिणः महाज्ञानिनः च।

एवं प्रतिदिनम् अपि समानरीत्या प्रशंसा कृता चेत् राज्ञः विशेषतृप्तिः न भवेत् इति आलोच्य ते प्रतिदिनम् अपि नूतनानि उपमानानि उक्त्वा राज्ञः पारितोषिकं प्राप्नुवन्ति स्म। एकः वदति स्म – "महाप्रभुः अद्य सुन्दरं पुष्पम् इव विराजते" इति। अपरः वदति स्म – "अप्सरोभिः परिवृतः देवेन्द्रः इव शोभते भवान्" इति।

राजास्थाने स्थिताः कवयः महाराजस्य सौन्दर्यस्य प्रशंसार्थं नूतनानि उपमानानि कल्पयित्वा महाज्ञानिनः श्रावयन्तः यथेष्टं धनं सम्पादयन्ति स्म। नूतनविधानि पदजालानि अपि सृजन्ति स्म ते। तानि महाज्ञानिनः यदा श्रावयन्ति तदा तेषाम् अर्थं महाराजः यद्यपि न जानाति, तथापि तेषु पदेषु स्थितम् अनुप्रासं शृण्वन् सः आनन्दतुन्दिलः भवति। स्वप्नलोके विहरन् अङ्गुलीभिः श्मश्रु कुटिलीकरोति।

महाज्ञानिषु अन्यतमः वृद्धः मन्त्री कदाचित् राजानम् उक्तवान्– "चण्डप्रचण्डमहाप्रभो!

सः सुवर्णविग्रहः यदि कदाचित् हसेत् तर्हि तस्याः नेत्रे उन्मीलिते भवतः। तस्याः हृदये स्पन्दनम् उत्पद्यते। यस्याः हृदयस्पन्दनं नेत्रपाटवं च अस्ति सा सौन्दर्यखनी एव कुतो न स्यात्, प्रथमदर्शनेन एव भवति अनुरागवती भवति। एवं सजीवं भविष्यन्त्या तया सौन्दर्याधिदेवतया परिणेष्यतः भवतः प्रजानां सौभाग्यं किमिति वर्णयामि?'' इति।

राजा एतेन परमसन्तुष्टः जातः। मन्त्रिणः वचनस्य श्रवणानन्तरं तस्य मनसि अन्यः विचारः उत्पन्नः – 'कथं वा सः स्त्रीविग्रहः अविलम्बेन सजीवः करणीयः?' इति। एतद्विषये सः कानिचन दिनानि सगम्भीरम् आलोच्य अन्ते देशे स्थितान् विदूषकान् सर्वान् राजधानीम् आनायितवान्। महता धनव्ययेन तेभ्यः चित्रविचित्राणि वेषभूषणानि दापितवान्। 'स्त्रीविग्रहस्य पुरतः विविधाः क्रीडाः प्रदर्शनीयाः, मनोरञ्जकतया नृत्यं करणीयं, हास्यरसः उत्पादनीयः च' इति तान् आज्ञापितवान्। ते विदूषकाः तथा कृत्वा कृत्वा श्रान्ताः। तथापि भटाः कशां खड्गं च प्रदर्शयन्तः भाययन्तः पुनः पुनः नृत्यं कारितवन्तः। यावत् ते मूर्च्छां गच्छेयुः तावत् नृत्यानि कारितानि। तथपि विग्रहस्य मुखे हासः न दृश्यते!

अन्ते राजा सर्वत्र सडिण्डिमम् उद्घोषितवान् यत् यः स्त्रीविग्रहं हासयति तस्मै विशेषपारितोषिकं दीयते इति।



एकदा रात्रौ स्त्रीविग्रहस्य समीपे एव विद्युद्रेखा दृष्टा। अर्धनिद्रायां मग्नः रक्षकभटः एतां विद्युतं स्त्रीविग्रहस्य हासं मन्यमानः राजसमीपं गत्वा ''स्त्रीविग्रहः अहसत्'' इति निवेदितवान्।

तत्समये राजा वस्तुतः भोजनं कुर्वन् आसीत्। वार्ताश्रवणसमनन्तरम् एव उत्थितः सः करप्रक्षालनादिकम् अपि विस्मृत्य धावन् सुवर्णविग्रहसमीपं गतवान्। पुनः पुनः परीक्षा कृता चेदपि विग्रहस्य मुखे हासः अन्यत् परिवर्तनं वा न दृष्टम्।

एतेन कुपितः राजा तं वार्तानिवेदकं रक्षकभटं तीक्ष्णदृष्ट्या पश्यन् – ''भोः! विग्रहः अहसत् इति भवता असत्यम् उक्तम्।



अथवा विग्रहः अहसतु इत्येव भावयेम, तथापि तादृशं विशिष्टं हासं द्रष्टुं राज्ञः मम केवलम् अधिकारः अस्ति। भवान् मद्दर्शनतः पूर्वं तं हासं द्रष्टुं न अर्हति। अतः अपराधिनः भवतः नेत्रे उन्मूलयिष्यामि। भोः, कः तत्र? सुतप्तं शूलायुधम् आनयतु" इति आज्ञापितवान्।

रक्षकभटः इदानीं भीत्या कम्पमानः अस्ति। किन्तु अदृष्टवशात् यावत् राज्ञः आज्ञा कार्यान्विता न अभवत् ततः पूर्वम् एव वृद्धः मन्त्री केनचित् मान्त्रिकेण सह आगत्य निवेदितवान् – "चण्डप्रचण्डमहाप्रभो! एषः महामान्त्रिकः अस्माकं राज्यम् आगतवान् अस्ति। एतस्य तादृशं सामर्थ्यम् अस्ति यत् स्वमहिम्ना एषः यत्किमपि अपूर्वं कार्यं साधयितुं शक्नोति। अतः एव एतं भवत्समीपम् आनीतवान् अस्मि। किं करणीयम् इति आज्ञापयितुम् अर्हति भवान्" इति।

राजा मान्त्रिकस्य दिशि दृष्टिं प्रसारितवान्। "आं महाप्रभो! भवतः आज्ञानुसारं कार्यं यावत् वा महत् भवतु नाम, साधयिष्यामि एव। पश्यतु तावत् मम सामर्थ्यम्" इति उक्त्वा करताडनशब्द कृतवान्। अनन्तरक्षणे मान्त्रिकस्य शिष्यः भल्लूकेन सह तत्र आगत्य स्थितवान्।

"इदानीं भवान् अत्र किं पश्यति महाराज!" इति पृष्टवान् मान्त्रिकः।

"सम्यक् शिक्षितः भल्लूकः भवतः आज्ञां पालयति इत्यत्र कः विशेषः? एतत् एव वा भवतः विशेषसामर्थ्यम्? भल्लूकं प्रथमम् इतः अपनयतु। भल्लूकतः अत्र सर्वत्र दुर्गन्धः प्रसृतः अस्ति" इति उक्तवान् राजा कोपेन।

"महाराज! क्षणकालं तिष्ठतु। एषः भल्लूकः इतः परं भल्लूकरूपेण न स्थास्यति" इति उत्वा सः मान्त्रिकः भल्लूकं बलात् पादेन प्रहृतवान्। भल्लूकः भूमौ अपतत्। मान्त्रिकस्य शिष्यः तस्य उपरि एकम् आच्छादकं स्थापितवान्।

मान्त्रिकः मन्त्रदण्डेन आच्छादकेन आवृतं भल्लूकं तदा तदा मृदु ताडयन् मन्त्रम् उच्चारयन् त्रिवारं प्रदक्षिणं कृतवान्।



आच्छादकस्य अन्तः चलनं दृष्टम्। मान्त्रिकः पुनः अपि किञ्चित्कालं मन्त्रं पठित्वा "हुं फट्" इति उच्चैः वदन् तीक्ष्णदृष्ट्या भल्लूकं दृष्टवान्। तदा आच्छादकम् अपसार्य कश्चन मानवः उत्थितवान्।

राजा तं परीक्षादृष्ट्या सम्यक् परिशीलितवान्। तस्मिन् पुरुषे भल्लूकस्य लक्षणम् एकम् अपि न दृश्यते स्म। राजा आश्चर्यचकितः अभवत्।

मान्त्रिकः भल्लूकं मानवरूपेण परिवर्तितवान् इति राजा विश्वसितवान्। 'भल्लूकवेषधारिणं पुरुषम् आनीय एषः वञ्चितवान् स्यात्' इति केषाञ्चित् सन्देहः उत्पन्नः। तथापि राजा एव अङ्गीकृतम् इत्यतः ते मौनं स्थितवन्तः।

एषः नूतनः मनुष्यः भल्लूकः इव व्यवहरति वा न वा इति द्रष्टुम् आगतस्य मन्त्रिणः नासिकायाम् एषः पुरुषः नखैः व्रणम् उत्पादितवान्।

तदा मान्त्रिकः उक्तवान् – "महाप्रभो! एषः अचिरात् एव भल्लूकस्वभावं त्यक्ष्यति। श्वः एतदभ्यन्तरे स्फुटं वदिष्यति च। अनन्तरं नखादीनाम् उपयोगं परित्यज्य खड्गादिभिः व्यवहर्तुं समर्थः भविष्यति च" इति।

एतत् वचनं श्रुत्वा तत्रस्थाः राजोद्योगिनः परस्परं मुखं दृष्टवन्तः।

तदा मान्त्रिकः राजानं पृष्टवान् – "महाप्रभो! अहं भल्लूकं मनुष्यरूपेण परिवर्तितवान् खलु? एतद्विषये भवतः कः अभिप्रायः?" इति।

राजा क्षणकालस्य मौनानन्तरं शिरः चालयन् – "भवतः सामर्थ्यम् अपूर्वम् एव। भवान् अन्यं भल्लूकम् अपि मनुष्यरूपेण परिवर्तयितुम् इदानीम् एव सिद्धः इति भावयामि। तादृशं किमपि न अपेक्षितम्। एतेन एव अहं भवति विश्वासं प्राप्तवान् अस्मि" इति उक्तवान्।

"महाप्रभुः विवेकी युक्तायुक्ततानिर्णये दक्षः च। भवान् विवेकसागरः इत्यत्र सन्देहः एव नास्ति" इति राजोद्योगिनः एककण्ठेन प्रशंसां कृतवन्तः।

"महाप्रभो! भल्लूकं मनुष्यरूपेण

परिवर्तयितुं शक्तः अहं स्त्रीविग्रहं सजीवं कर्तुं, तस्याः मुखे हासं विकासयितुं वा न शक्नुयां वा?" इति पृष्टवान् मान्त्रिकः।

"भवता कुतो वा न शक्येत? भावि परिणामं चिन्तयतः मम मनसि पक्षी इव स्वेच्छया आकाशे उड्डयनीयम् इति इच्छा भवति। किन्तु तथा कर्तुं न शक्यते खलु" इति उक्तवान् राजा।

"भवतः तुन्दिलत्वकारणतः भवान् तथा उड्डयनं कर्तुं न शक्नोति। किन्तु यदा विग्रहः सजीवः भवेत् तदा भवतः तुन्दिलत्वं स्वयम् अपगच्छेत्। अत्र संशयः एव मास्तु" इति उक्तवान् मान्त्रिकः।



"महामान्त्रिक! इदानीम् एव भवतः महिमान्वितेन आच्छादकेन तं स्त्रीविग्रहम् आच्छादयेम। अनन्तरं भवान् मन्त्रं पठन् मन्त्रदण्डेन यथावकाशं स्पृशतु नाम। यदा विग्रहरूपेण स्थिता सा स्त्री सजीवा भविष्यति तदा मया एतावता अनुभूतां विरहवेदनां स्वयं ज्ञास्यति। कठिनतार्थम् आत्मानं स्वयं निन्दिष्यति च" इति भावावेशेन उक्तवान् राजा।

"भल्लूकस्य परिवर्तनार्थं यः उपायः आश्रितः तेन उपायेन ताम् उज्जीवयितुं न शक्यते महाराज! तदर्थं भवता सप्ताहं यावत् उपवासः आचरणीयः। तदनन्तरं गुहायां विग्रहस्य समीपे उपविश्य ध्यानं करणीयम्। तदनन्तरम् एव इष्टसिद्धिः भवेत्" इति उक्तवान् मान्त्रिकः।

"सप्ताहावधिकः उपवासः! स च मया करणीयः!!" इति भीत्या आश्चर्येण च उद्गारं प्रकटितवान् राजा।

"सप्ताहात्मकः उपवासः अन्यूनातिरिक्त प्रचलेत्। यदि उपवासव्रते दोषः तर्हि फलं न प्राप्येत" इति उक्तवान् मान्त्रिकः।

"उपवाससमये लड्डुकादिकं स्वीकर्तुं शक्येत खलु श्रीमन्!" इति आशया पृष्टवान् राजा।

"सर्वथा न शक्यते महाप्रभो! तथा कृतं चेत् व्रतहानिः भवेत्" इति उक्तवान् मान्त्रिकः।

"कदाचित् किञ्चित् वा कुक्कुटमांसं सेवितुं शक्येत खलु?" इति पुनः पृष्टवान्

राजा।

"कुक्कुटमांसं किं, कुक्कुटाण्डं स्प्रष्टुम् अपि न शक्यते। उपवासव्रतं नाम न सामान्यं तत्" इति उक्त्वा मान्त्रिकः राजानं करुणया दृष्ट्वा पश्यन् पुनः उक्तवान् – "उपवासव्रतानन्तरं जीवं प्राप्स्यन्त्याः अप्सरसः पार्श्वे उपविश्य भवान् पञ्चभक्ष्य-परमान्नादिकं खादिष्यति। अल्पेन श्रमेण आजीवं सुखेन स्थास्यति भवान्। अतः प्राप्स्यमाणं फलं स्मरन् उपवाससन्दर्भे कालं यापयतु। तेन उत्साहः वर्धते। उपवासः यथाक्रमम् आचरितः भविष्यति। अप्सरसं परिणीतवान् श्रेष्ठः राजा इति भवतः नाम चरित्रे आचन्द्रार्कं स्थास्यति इति तु निश्चितम्" इति।

अनन्योपायः राजा मन्दं शिरः चालयन् उपवासार्थम् आत्मनः अङ्गीकारं सूचितवान्।

तदा मान्त्रिकः पुनः उक्तवान्– "महाप्रभो! एकाकिना मया उपवासः करणीयः इति खेदः मास्तु। भवता सह अहम् अपि उपवासव्रतम् आचरितुं सिद्धः अस्मि" इति।

तदा मन्त्रिणः इतरे राजोद्योगिनः च – "वयम् अपि महाराजेन सह उपवासव्रतम् आचरिष्यामः" इति एककण्ठेन उक्तवन्तः।

"युक्तः निर्णयः एषः। चण्डप्रचण्डे महाराजे उपवासम् आचरति सति, कस्य वा भोजने उत्साहः भवेत्? किन्तु महाराज! भवदर्थं सज्जीक्रियमाणं भोजनं व्यर्थं न भवतु खलु? तत् भोजनं भवत्प्रतिनिधीभूय अहं स्वीकरिष्यामि। एतदर्थम् अनुमतिदानेन अहम् अनुग्रहणीयः भवता। अन्यच्च अहं यदि शक्तिमान् स्यां तर्हि एव खलु भवतः इष्टार्थः सेत्स्यति? अहं दुर्बलः जातः चेत् सर्वं कार्यं विनष्टं भवेत" इति उक्तवान् मान्त्रिकः।

"तत् यथाकथं वा करोतु। विग्रहरूपेण स्थिता सा स्त्री उज्जीविता भवेत् इत्यत्र एव मम तात्पर्यम्" इति उक्तवान् राजा।

(अनुवर्तते)






# सुवर्णयोगः

वेतालस्य निर्गमनात् सुदीर्घं निःश्वस्य त्रिविक्रमः आहारादिकं संसेव्य विश्रान्तिसुखम् अनुभूय नवोत्साहं प्राप्य अनन्तररात्रौ यथापूर्वं वृक्षस्य समीपं गतवान्। वृक्षम् आरुह्य शवं स्कन्धे आरोप्य अधः आगत्य मौनं श्मशानाभिमुखं प्रस्थितवान् च। तदा शवान्तर्गतः बेतालः अवदत्– "अये राजन्! महत् कार्यं साधनीयम् इति इच्छया भवान् कार्यप्रवृत्तः अस्ति। एषः प्रयत्नः श्लाघनीयः एव। किन्तु भवादृशाः कार्यस्य अन्ते फलप्राप्तितः पूर्वम् आश्चर्यकररूपेण प्रतिनिवृत्ताः अपि भवन्ति इत्येषः अंशः न विस्मरणीयः। अत्र उदाहरणरूपेण एकां कथां श्रावयामि। कथां शृण्वतः गच्छतः भवतः मार्गायासः अपि तेन परिहृतः भवेत्" इति।

अनन्तरं वेतालेन कथा आरब्धा–

पूर्वं कल्लूकः पक्षिणः मारयित्वा खादन्

## वेतालकथा



विक्रयणं कुर्वन् च जीवति स्म। एकदा तेन कोऽपि पक्षी न प्राप्तः। रिक्तहस्ततया प्रतिगन्तुं न इच्छति सः। अतः सः अरण्ये सञ्चारेण जातस्य आयासस्य परिहारार्थम् एकस्य वृक्षस्य अधः उपविष्टवान्।

तत्समये सुवर्णकान्त्या प्रकाशमानः कश्चन हंसः तस्यां दिशि एव आगच्छत्। एतत् दृष्ट्वा कल्लूकः झटिति उत्थाय बाणप्रयोगं कृतवान्। बाणः हंसस्य शरीरं प्रविश्य अपरं पार्श्वम् आगच्छत्। किन्तु हंसः किञ्चिदपि न व्रणितः। सः यथापूर्वम् उड्डयमानः अग्रे अगच्छत्। एतादृशं विचित्रं कल्लूकः इतःपूर्वं न दृष्टवान् आसीत्।

आश्चर्यचकितः सः पक्षिणम् अनुसृतवान्। किञ्चिद्दूरं गमनानन्तरं हंसस्य शरीरात् पतितं सुवर्णवर्णयुतं पिच्छद्वयं तेन प्राप्तम्। 'मम बाणप्रयोगतः एव एतत् द्वयं पतितं स्यात्' इति भावयन् कल्लूकः हंसम् अनुसरन् अग्रे गतवान्। केनापि प्रयत्नेन हंसः ग्रहीतव्यः एव इति तस्य विचारः आसीत्।

एवं सायङ्कालपर्यन्तम् अपि कल्लूकः हंसम् अनुसरन् आसीत्। सायं कश्चन वृद्धः अभिमुखम् आगतः। तस्य हस्ते कानिचन विविधजातीयानि मूलानि अपि आसन्। कल्लूकः सुवर्णहंसस्य वार्तां निवेद्य स्वसमीपे स्थितं पिच्छद्वयं प्रदर्श्य– "एषः कीदृशः पक्षी?" इति तं पृष्टवान्।

वृद्धः पिच्छद्वयं सम्यक् परीक्ष्य– "एतत् द्वयं सुवर्णमयम् इत्यत्र सन्देहः एव नास्ति। किन्तु ते हंसाः कस्यां जातौ जाताः इति अहम् अपि वक्तुं न शक्नोमि। वस्तुतः अपि भवता ते पक्षिणः दृष्टाः वा?" इति पृष्टवान्।

कल्लूकः पूर्वोक्तम् एव पुनः उच्चारितवान्। तदनन्तरं सः वृद्धः आत्मनः परिचयं सविस्तरं निवेदितवान्।

तस्य नाम मणिसिद्धिः इति। सः धनिकस्य भूस्वामिनः पुत्रः। यदा सः पञ्चवर्षीयः आसीत् तदा तदीयः पिता तीव्रेण रोगेण पीडितः अभवत्।

तस्य समीपे तु सुवर्णं राशिरूपेण आसीत्। आत्मनः मरणानन्तरं सुवर्णराशिः दायादेषु विभक्तः भविष्यति इति तस्य चिन्ता



आरब्धा। सः भूस्वामी मन्त्रतन्त्रज्ञः अपि। अतः सः सुवर्णराशिं कस्याञ्चित् गुहायां स्थापयित्वा मन्त्रबलात् दिग्बन्धनेन गुहाद्वारं पिधाय ताम्रफलके द्वारोद्घाटनक्रमं विलिख्य पत्न्याः हस्ते तत् ताम्रफलकं संस्थाप्य दिवङ्गतः अभवत्।

मणिसिद्धेः माता तत् ताम्रफलकं प्राणसमं मन्यमाना जागरूकतया रक्षति स्म। 'पुत्रः यदा प्रौढः भविष्यति तदा तस्य हस्ते तत् अर्पणीयम्' इति तस्याः विचारः आसीत्। किन्तु दुरदृष्टवशात् कदाचित् तत् ताम्रफलकम् अग्नौ पतितं, द्रवीभूय भस्मीभूतं च। एतेन चिन्ताग्रस्ता मणिसिद्धेः माता तया एव चिन्तया प्राणान् त्यक्तवती। एवं धनिकस्य पुत्रः सन् अपि मणिसिद्धिः निर्धनः अनाथः च जातः। नष्टम् ऐश्वर्यं कथमपि प्राप्तव्यम् एव इति निश्चित्य मणिसिद्धिः रसवादिनः अन्विष्य तेषां सेवां कुर्वन् सुवर्णनिर्माणार्थं प्रयतमानः आसीत्। वार्धक्ये प्राप्ते अपि सः प्रयत्नात् विमुखः न जातः आसीत्।

मणिसिद्धिः आत्मनः कथाम् एवं निरूप्य– "सुवर्णमयः हंसः ग्रहीतव्यः एव। अहम् अपि भवता सह आगच्छामि" इति उक्त्वा तेन सह प्रस्थितवान्।

एवं कल्लूकः मणिसिद्धिः च सुवर्णमयस्य हंसस्य अन्वेषणं कुर्वन्तौ अग्रे गतवन्तौ। अनन्तरदिने मध्याह्ने तौ एकं नदीतीरं प्राप्तवन्तौ।

तत्र पादाभ्यां वृक्षशाखां दृढं गृहीत्वा अधोमुखं लम्बमानः कश्चन संन्यासी ताभ्यां दृष्टः। तस्य अधोभागे अग्निः धगधगेति ज्वलति स्म। अग्नेः तापं सहमानः एव सः तपसि लीनः आसीत्।

कल्लूकः मणिसिद्धिः च तं तपस्विनं दृष्ट्वा आश्चर्यम् अनुभवन्तौ तस्य समीपं गतवन्तौ। तदा सः संन्यासी नेत्रे उन्मील्य एतौ दृष्ट्वा पृष्टवान्– "कौ भवन्तौ? अस्मिन् घोरे अरण्ये किं वा कार्यम्?" इति। तस्य कण्ठध्वनिः गुहातः आगच्छन् अस्ति इव भासते स्म।

कल्लूकः आगमनकारणं निवेदितवान्।



तदा सः संन्यासी तपोभङ्गीं परित्यज्य तयोः समीपम् आगच्छन्– "मम नाम वज्रकण्ठः। मम पिता महाराजस्य कोषाधिकारी आसीत्। अहं तु सामान्यः सैनिकः आसम्। एकदा कोषागारे महत् चौर्यं प्रवृत्तम्। राजा मम पितरि सन्देहं प्रकटयन् तं कारागारे स्थापितवान्। केषाञ्चित् दिनानाम् अनन्तरं लुण्ठकानां दलं राजधान्याः उपरि आक्रमणम् अकरोत्। तदा वयं सैनिकाः सधैर्यं प्रत्याक्रमणं कृतवन्तः। लुण्ठकेषु बहवः मृताः। अन्ये बन्दिनः जाताः। तेषु लुण्ठकनायकः अपि अन्यतमः। तस्य कण्ठे कोषागारात् चोरितः एकः कण्ठहारः अपि आसीत्। अतः अहं तं राजसमीपं नीतवान्। किन्तु इतः पूर्वम् एव अपमाननं सोढुम् अशक्तः मम पिता आत्महत्यया प्राणान् त्यक्तवान् आसीत्।

पितुः मरणात् खिन्नः अहं वैराग्यं प्राप्य संन्यासिभिः सह देशविदेशेषु अटितवान्। अस्मिन् एव जन्मनि कथञ्चित् राजपदवी प्राप्तव्या इति मम अभिलाषः। धनं पर्याप्तमात्रेण यदि स्यात् तर्हि सैनिकान् सज्जीकर्तुं शक्यते। सैनिकबले विद्यमाने राज्यप्राप्तिः, तद्द्वारा राजपदवीप्राप्तिः च न क्लेशकरी। कस्यचित् महात्मनः उपदेशानुसारम् अहं लक्ष्मीकटाक्षप्राप्त्यर्थम् एवं तपः आचरन् अस्मि" इति उक्तवान्।

अत्रान्तरे सुवर्णमयः हंसः पक्षौ चालयन् तेषाम् उपरि एव उड्डीय गतः। तत् दृष्ट्वा वज्रकण्ठः– "एषः सुवर्णहंसः! वस्तुतः अपि अस्माकं सुवर्णयोगः अस्ति। प्रायः हंसः एकाकितया न तिष्ठति। समीपे एव कुत्रापि हंसानां वसतिस्थानं स्यात् एव। तत्रैव गच्छाम तावत्" इति उत्साहेन उक्तवान्।

ते त्रयः अपि हंसगमनमार्गम् अनुसरन्तः अग्रे गतवन्तः। मार्गे तैः कश्चन कालिकालयः प्राप्तः। स च आलयः जीर्णावस्थायाम् आसीत्।

कालीमातुः विग्रहस्य पार्श्वे कश्चन बालकः उपविश्य पूजां कुर्वन् आसीत्। पार्श्वे एव कश्चन दृढकायः तीक्ष्णखड्गधारी स्थितः आसीत्। एतत् दृष्टवतां तेषां महदाश्चर्यम्।

ते त्रयः परस्परं समालोच्य युगपत् एव तस्य वृद्धकायस्य उपरि आक्रमणं कृत्वा— "कीदृशम् अन्याय्यम् एतत्" इति वदन्तः तस्य हस्तौ पृष्ठतः नीत्वा दृढं गृहीतवन्तः।

सः ततः विमोचनं प्राप्तुं प्रयत्नं कुर्वन्— "के भवन्तः? मम पुत्रम् अहं किमपि वा कुर्याम्। मम निरोधने भवतां कः अधिकारः?" इति कोपेन पृष्टवान्।

"तदस्तु नाम। प्रथमं वस्तुस्थितिं निवेदयतु तावत्" इति उक्तवान् वज्रकण्ठः।

तदा सः उक्तवान्— "मम नाम माणिक्यवर्मा इति। कालीमातुः पूजा परम्पराप्राप्ता। मम त्रयः पुत्राः। मम ज्येष्ठः पुत्रः रोगपीडितः जातः। योग्यचिकित्सां व्यवस्थापयितुम् अहं न शक्तवान्। तेन सः प्राणान् त्यक्तवान्। अहम् अतीव दुःखितः सन् कालीमातरं निन्दन् देवालये सुप्तवान् आसम्। तदा कालीमाता मम स्वप्ने आगत्य— 'अवशिष्टयोः पुत्रयोः अन्यतरः मह्यं समर्पितः चेत् भवतः गृहे कनकवृष्टिं करिष्यामि' इति सूचितवती। अतः एतं बलिरूपेण समर्पयन् अस्मि" इति।

मणिसिद्धिः कोपेन— "मूर्ख! प्रथमं खड्गं दूरे क्षिपतु। अस्माकं सुवर्णयोगः आसन्नः अस्ति" इति उक्त्वा आत्मनः आगमनकारणम् अपि निवेदितवान्।

अनन्तरं ते माणिक्यवर्मणा अपि सह हंसगमनमार्गम् अनुसृत्य वेगेन गतवन्तः।



अनन्तरदिने प्रातःकालसमये ते एकं पर्वतशिखरं प्राप्तवन्तः। तत्र तैः किञ्चन महासरोवरं दृष्टम्। तत्र सुवर्णकान्त्या विराजमानाः शताधिकाः हंसाः विहरन्तः आसन्। सरसि सर्वत्र अपि विकसितानि कमलानि एव! तानि अपि सुवर्णमयानि! अहो सौभाग्यम्!!

एतत् दृश्यं दृष्ट्वा तेषु त्रयः अपि आवेशवशंगताः कमलानि वशीकर्तुं सरोवरे अवतीर्णवन्तः।

कल्लूकः तु क्षणकालं तीरे स्थितः आसीत्। तस्य हंसग्रहणे आसक्तिः। अतः सः हंसान् ग्रहीतुं प्रयत्नं कृतवान्। किन्तु ते हंसाः अग्रे अग्रे गच्छन्तः कथमपि तेन न प्राप्यन्ते स्म।

कल्लूकः इतोऽपि अग्रे गतवान्। आत्मना सह आगताः कुत्र सन्ति इति द्रष्टुं सः मुखं परिवर्तितवान्।

किन्तु तत्र कोऽपि न दृश्यते। त्रयः हंसाः तं दृष्ट्वा चञ्चूम् इतस्ततः चालयन्तः जले प्लवन्ते!

एतत् दृश्यं दृष्ट्वा कल्लूकः भीतिं प्राप्य झटिति तीरम् आगत्य वेगेन स्वगृहं प्रति प्रस्थितवान्।

वेतालः एवं कथां समाप्य अपृच्छत्– "अये राजन्! कल्लूकः इव इतरे त्रयः अपि सुवर्णमयस्य हंसस्य ग्रहणार्थं खलु प्रस्थिताः? तथापि ते त्रयः कथं वा हंसरूपं प्राप्तवन्तः? कल्लूकः कथं वा हंसरूपं न प्राप्तवान्? एतस्य उत्तरं जानन् अपि यदि भवान् न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्" इति।

तदा मौनं स्थातुम् अशक्तः त्रिविक्रमः एवम् उक्तवान्– "कल्लूकः व्याधजातौ जातः। पक्षिग्रहणं तस्य वृत्तिः। अन्यं कमपि पक्षिणम् अपश्यन् सः अकस्मात् दृष्टस्य सुवर्णमयस्य हंसस्य ग्रहणे उद्युक्तः जातः। बाणप्रयोगः तेन यः कृतः सः अपि मांसप्राप्तीच्छया एव। अन्येषां कथा तु अन्या एव। सुवर्णं प्राप्तव्यम् इति तृष्णया ते कार्यप्रवृत्ताः। अतः एव सुवर्णमयान् हंसान् पश्यन्तः अपि सुवर्णकमलानि प्राप्तुम् उद्युक्ताः जाताः। सुवर्णकमलानां प्राप्तिः सुलभा लाभकरी च इति तेषां विचारः। तृष्णावशात् एव ते हंसरूपं प्राप्तवन्तः। कल्लूकः तु एतावदेव चिन्तयति यत् – नूतनविधस्य पक्षिणः ग्रहणेन मया किञ्चिदधिकं धनं प्राप्येत इति। सुवर्णतृष्णा तस्य नास्ति। यदा सहचराः हंसरूपं प्राप्तवन्तः तदा सः सरोवरस्य वैशिष्ट्यं ज्ञातवान्। अतः एव हंसग्रहणं परित्यज्य झटिति प्रत्यागतवान्" इति।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत्। अतः शवान्तर्गतः वेतालः अदृश्यः भूत्वा यथापूर्वं वृक्षस्य शाखाम् अवलम्बितवान्।





# धर्मदर्शी

पूर्वं मगधराज्ये शैवमतस्य वैष्णवमतस्य च विशेषप्राबल्यम् आसीत्। तयोः मतयोः परस्परविवादः अपि तदा तदा प्रचलति स्म। अतः मगधचक्रवर्ती महानन्दः राजधान्यां शिवालयस्य पार्श्वे एव विष्णुमन्दिरम् अपि निर्मापितवान् आसीत्।

अनयोः मन्दिरयोः व्यवस्थानिर्वहणार्थं कः नियोक्तव्यः इति समस्या उत्पन्ना।

महानन्दः, एतद्विषये मन्त्रिणः अभिप्रायं पृष्टवान्।

तदा मन्त्री उक्तवान्– ''प्रभो! मन्दिरस्य धर्मदर्शी वाक्चतुरः स्यात्। लोकज्ञानी, व्यवहारदक्षः, निष्पक्षपाती च स्यात्। मन्दिरस्य आयः वर्धते चेत् एव लोकोपयोगीनि कार्याणि निर्वोढुं शक्यानि। अतः आयवर्धनतन्त्रम् अपि धर्मदर्शी जानीयात्'' इति।

''तादृशी काचित् व्यक्तिः भवतः दृष्टिपथे अस्ति वा?'' इति पृष्टवान् राजा।

''आं, तादृशः कश्चित् अस्ति। तस्य नाम शिवरामः इति। सः वाक्चतुरः लोकज्ञानी, व्यवहारदक्षः, च। तं धर्मदर्शित्वेन नियोक्तुम् अर्हति भवान्'' इति उक्तवान् मन्त्री।

राजा तद्दिने एव मन्त्रिणा सूचित शिवरामम् आहूय द्वयोः अपि मन्दिरयोः धर्मदर्शिस्थाने नियोजितवान्।

अल्पे एव काले विश्वासार्हाणां गूढचराणां द्वारा महाराजेन ज्ञातं यत् शिवरामस्य धर्मदर्शित्वे द्वयोः अपि मन्दिरयोः प्रगतिः वर्धमाना अस्ति इति।

शिवरामस्य सामर्थ्यस्य परीक्षणार्थं राजा महानन्दः कदाचित् महावणिजः वेषं धृत्वा मन्दिरसमीपं गतवान्।

वणिग्वेषेण स्थितस्य महाराजस्य

''विवेकः''

परिचयः धर्मदर्शिना शिवरामेण न प्राप्तः। तदीयासु अङ्गुलीषु धृतानि अङ्गुलीयकानि दृष्ट्वा सः चिन्तितवान् यत् एषः आढ्यः वणिक् इति। अतः सः विशेषादरेण मन्दिरद्वयम् अपि स्वयं प्रदर्श्य भक्तादिभिः दत्तेन धनेन लोकसेवाकार्याणि कथं सुव्यवस्थितरूपेण चाल्यमानानि सन्ति इति विस्तरेण निरूपितवान्।

तदा वणिग्वेषधारी राजा तालपत्रस्य उपरि शतम् अति अङ्कैः लिखित्वा 'एतावन्ति सुवर्णनाणकानि अहं दातुम् इच्छामि' इति सूचितवान्।

तदा शिवरामः मन्दहासपूर्वकम् उक्तवान्– "श्रीमन्! भवतः सामर्थ्ये चिन्त्यमाने एतावत् तु एकस्मै देवाय अपि न अलम्। अत्र तु देवौ स्तः। अतः दानप्रमाणं किञ्चित् वर्धयतु" इति।

राजा क्षणकालम् आलोच्य पृष्टवान्– "लिखितायाः सङ्ख्यायाः दक्षिणपार्श्वं वर्धयामि, उत वामपार्श्वम्?" इति।

"भक्तः भवान् दाता, स्वीकर्ता च भगवान्। अतः अहं मध्ये न प्रविशामि। भवान् एव तस्याः सङ्ख्यायाः पुरतः पृष्ठतः वा अन्यां सङ्ख्यां लिखित्वा तावत्परिमाणकं धनं देवाय अर्पयतु" इति उक्तवान् शिवरामः।

राजा सङ्ख्यायाः दक्षिणतः एकं लिखितवान्। तदा १००१ इति सङ्ख्या प्राप्ता।

"श्रीमन्! 'एको देवः नाम विभिन्नम्' इति ज्ञानिनः वदन्ति। अतः उभयत्र अपि समभावः उचितः। भवता सङ्ख्यायाः दक्षिणतः अन्यम् अङ्कं लिखता विष्णुविषये पक्षपातः प्रदर्शितः इव। अतः वामतः अपि तम् एव अङ्कं लिखतु, येन वामतः स्थितः शिवः अपि तुष्टः भवेत्" इति उक्तवान् शिवरामः।

राजा हसन् पूर्वं लिखितायाः सङ्ख्यायाः वामतः अपि एकम् अङ्कं लिखितवान्। तदा ११००१ इति सङ्ख्या सिद्धा। धर्मदर्शिनः शिवरामस्य मृदु कुशलं च व्यवहारं दृष्टवतः महाराजस्य महान् सन्तोषः जातः।





काव्यकथा -

# राक्षसमुद्रिका-२

वङ्गराज्यीयेन राजदूतेन उपस्थापितां समस्यां परिहरता चन्द्रगुप्तेन जनादरः गौरवं च विशेषतः प्राप्तम्। जनाः तं गजस्य उपरि आरोप्य शोभायात्रया गृहं प्रापितवन्तः। एवं जनप्रियतां प्राप्तवन्तं चन्द्रगुप्तं कारागारे पुनः स्थापयितुं नन्दाः न शक्तवन्तः।

एतेषु एव दिनेषु ग्रीकचक्रवर्ती अलेक्साण्डरः आक्रमणार्थम् आगतः भारते एव किञ्चित्कालं स्थितवान्। तदा चन्द्रगुप्तः ग्रीकसेनां प्रविश्य नूतनानि युद्धतन्त्राणि ज्ञातवान्। एतेन विशेषशक्तिशाली जातः च।





एकदा चन्द्रगुप्तः ग्रीकसेनानायकम् अपमानितवान्। तदा ग्रीकसैनिकाः चन्द्रगुप्तस्य बन्धनार्थम् उद्युक्ताः। किन्तु चन्द्रगुप्तः कथञ्चित् ततः पलाय्य निरपायं प्रदेशं प्राप्तवान्।



तेषु एव दिनेषु मगधराजभवने भोजनकूटः प्रवृत्तः। तत्र चाणक्यनाम्ना प्रसिद्धः विष्णुगुप्तः नाम ब्राह्मणः सामान्यवेषेण भागं गृहीतवान्। सेवकाः तं सामान्यं मन्यमानाः अपमाननपूर्वकं ततः निष्कासितवन्तः। एतेन अपमानेन कुपितः चाणक्यः नन्दवंशस्य नाशनं प्रतिज्ञाय ततः गतवान्।

दैवयोगात् चाणक्यचन्द्रगुप्तयोः मेलनं जातम्। नन्दानां विषये उभयोः अपि असमाधानम् आसीत् एव। अतः तयोः मैत्री गाढा जाता। अपूर्वा बुद्धिशक्तिः अनुपमेन धैर्येण सम्मिलिता अभवत्। तौ उभौ प्रतीकारसाधनार्थं सन्नद्धौ जातौ।





तत्समये मगधदेशस्य पार्श्वे स्थितम् अरण्यप्रदेशं पर्वतकः नाम म्लेच्छराजः पालयन् आसीत्। चाणक्यः पर्वतकस्य मैत्रीं सम्पाद्य तम् उक्तवान् यत् भवान् यदि सैन्यसाहाय्यं कुर्यात् तर्हि विजयप्राप्त्यनन्तरं मगधस्य अर्धभागः भवते दीयते इति। एतं प्रस्तावं पर्वतकः सन्तोषेण अङ्गीकृतवान्।

चन्द्रगुप्तः पर्वतकस्य सैन्येन सह मगधदेशस्य उपरि आक्रमणं कृतवान्। भयङ्करं युद्धं प्रवृत्तम्। अन्ते नन्दसैन्यं पराजयं प्राप्नोत्। मगधराज्यं चन्द्रगुप्तस्य अधीनं जातम्।





महानन्दः मन्त्रिणः राक्षसस्य साहाय्येन सुरङ्गमार्गेण पलाय्य एकं रहस्यगृहं प्रविष्टवान्। तथापि दक्षाः चाणक्यसैनिकाः तं हतवन्तः। राजमरणेन मन्त्री राक्षसः चिन्तासागरे निमग्नः।

चन्द्रगुप्तः मगधसिंहासनं विधिवत् आरूढवान्। वीरम्, असमसाहसिनं, धैर्यशालिनं चन्द्रगुप्तं शासकत्वेन प्राप्य प्रजाः अतीव सन्तुष्टाः।





महानन्दस्य मरणात् नितरां दुःखितः राक्षसः प्रतीकारं साधयितुम् इच्छन् एकम् उपायम् आश्रितवान्। विषप्रयोगेण राजा मारणीयः इति उक्त्वा एकां सुन्दराङ्गीं कन्यां राजभवनं प्रति प्रेषितवान्। किन्तु एषा वार्ता चतुरेण चाणक्येन गुप्तचरद्वारा पूर्वम् एव ज्ञाता।

राजभवने चाणक्यस्य दूतैः बद्धा सा सुन्दराङ्गी क्षमां याचितवती। तदा चाणक्यः ताम् उक्तवान्—"स्वहावभावादिभिः पर्वतकं वशीकृत्य उपायेन मारयितुम् अङ्गीकरोति चेत् भवती मरणदण्डनात् विमुक्ता भवेत्" इति। 'एवम् उपायेन पर्वतकः मारितः चेत् मगधराज्यस्य अर्धं यत् दातव्यं तत् न भविष्यति' इति चाणक्यस्य विचारः।





एतदनुसारं पर्वतकस्य भवनं गता विषकन्या हावभावादिभिः पर्वतकं सन्तोषितवती। पुनः एकदा मधुनि विषं योजयित्वा पायितवती च। एवं पर्वतकस्य जीवितकथा समाप्ता अभवत्।

—(अनुवर्तते)



# श्रेष्ठं दानम्

धर्मपुरनामके ग्रामे अभिरामः नाम वणिक् निवसति स्म। तदीयः आपणः ग्रामे सुप्रसिद्धः। सः कदाचित् वाणिज्यनिमित्तं देवपुरं गत्वा शकटेन प्रत्यागच्छन् आसीत्।

यदा देवपुरस्य सीमा अतिक्रान्ता तदा अभिरामः कञ्चन पुरुषं दृष्टवान्। स्यूतसहितः सः पुरुषः शकटसमीपम् आगत्य अभिरामं पृष्टवान्– "अहं पुरुषोत्तमपुरं गच्छन् अस्मि। भवान् अपि तेनैव खलु मार्गेण गच्छति? भवतः शकटे ममापि अवकाशं दातुं शक्नोति वा?" इति।

अभिरामः तम् इतःपूर्वं देवपुरे आपणे दृष्टवान् आसीत्। एकस्मिन् एव आपणे ताभ्यां भल्लातकं क्रीतम् आसीत्। 'प्रयाणे अन्यः यदि स्यात् तर्हि नीरसता अपगच्छति' इति आलोच्य अभिरामः तस्य प्रार्थनाम् अङ्गीकृत्य तं शकटे उपवेष्टुं सूचितवान्।

नूतनस्य उपवेशनानन्तरं शकटचालकः शिवः शकटम् अग्रे चालितवान्।

सम्भाषणेन ज्ञातं यत् तस्य आगन्तुकस्य नाम रामराजः इति, पुरुषोत्तमपुरे तस्य एकरत्रयपरिमिता भूमिः अस्ति इति च।

गमनसमये मार्गे ये हस्तं प्रसारयन्ति तेभ्यः भिक्षुकेभ्यः अभिरामः एकैकं नाणकं यच्छति स्म। रामराजः तु एतत् पश्यन् अपि मौनं तिष्ठति स्म। परीवर्तः नास्ति इति वदन् याचकान् प्रतिप्रेषयति स्म च।

एतत् दृष्ट्वा अभिरामः रामराजम् उक्तवान्– "भोः! अहम् अवकाशे प्राप्ते यथाशक्ति दानं करोमि। एवं करणेन एव जीवनस्य सार्थक्यम् इति मम अभिप्रायः। दानसमये सदा अहं तृप्तिम् अनुभवामि। अतः कोषे सर्वदा परीवर्तं स्थापयामि" इति।

तत्समये शकटस्य कीलः अकस्मात्

"अनामिका"

पतितः। एतत् ज्ञातवान् शकटचालकः शिवः शकटं स्थगयित्वा, शकटात् अवतीर्य किञ्चित् पृष्ठतः गत्वा कीलम् आनीतवान्। दृढतया कीलस्य योजनार्थं समीचीनां शिलाम् अन्वेष्टुम् उद्युक्तः जातः च।

अभिरामः रामराजः च शकटात् अवतीर्य वृक्षच्छायायां स्थितवन्तौ। तदा कश्चन कृशकायः वृद्धः शकटसमीपम् आगतवान्। सः दण्डसाहाय्येन चलति स्म। उत्तमैः वेषभूषैः अलङ्कृतम् अभिरामं दृष्ट्वा सः दैन्येन प्रार्थितवान्– "श्रीमन्! दिनद्वयतः उपवासम् आचरन् अस्मि। खादनार्थं भवत्समीपे यदि किमपि स्यात् तर्हि कृपया ददातु" इति।

तदा अभिरामः उक्तवान्– "अस्थाने मार्गे खादनार्थं किं वा लभ्येत? समीपे पुरुषोत्तमपुरम् अस्ति। तत्र गत्वा याचनं करोति चेत् कोऽपि किमपि दद्यात्। अथवा किञ्चित् धनं ददामि। तेन किमपि क्रीत्वा खादतु" इति।

अत्रान्तरे रामराजः शकटसमीपं गत्वा भल्लातकग्रन्थिं स्वीकृत्य वृक्षसमीपम् आगत्य तं ग्रन्थिं वृद्धाय यच्छन् उक्तवान्– "तात! अत्र भल्लातकबीजानि सन्ति। एतानि खादन् बुभुक्षां निवारयतु। समीपस्थात् कूपात् जलम् उद्धृत्य पिबतु च" इति।

एतत् श्रुतवतः वृद्धस्य नेत्राभ्याम् अश्रूणि आगतानि। सः रामराजम् उक्तवान्– "भल्लातकं बहुमूल्यकम् इति मया श्रुतम्। पुत्राणां निमित्तम् अन्यनिमित्तं वा तत् क्रीतं



स्यात्। बहुमूल्येन क्रीतम् एतत् मह्यं मास्तु भोः" इति।

"चिन्ता नास्ति, स्वीकरोतु। एतस्य खादनेन भवतः बुभुक्षा निवृत्ता यदि भवेत् तर्हि तेन मम महान् सन्तोषः। आत्मनः कामनाः निगृह्य दानं कृतं चेत् एव जन्मनः सार्थक्यम् इति एतेन मम मित्रेण इदानीम् एव उक्तम्। अतः निस्सङ्कोचं स्वीकरोतु" इति साग्रहम् उक्तवान्।

वृद्धः कृतज्ञतापूर्वकं तौ प्रणमन्– "मया जीवने कदाचित् एकवारम् एव भल्लातकानि कानिचन एव खादितानि आसन्। एतावता प्रमाणेन इदम्प्रथमतया पश्यन् अस्मि। भवन्तौ चिरकालं जीवताम्" इति उक्त्वा सन्तोषेण भल्लातकानि खादन् कूपस्य दिशि गतवान्।

बुभुक्षितस्य तस्य वृद्धस्य मुखे व्याप्तां प्रसन्नतां दृष्ट्वा अभिरामः आलोचने मग्नः जातः– 'मया अपि सदा दानं क्रियते। किन्तु तदपेक्षया रामराजस्य दानम् एव श्रेष्ठम्। रामराजः वस्तुतः अपि कामनाः निगृह्य याचकस्य अपेक्षां पूरितवान्। मया तु तादृशं कार्यं न कृतम्। एवं त्यागे बुद्धिः अपि न कृता। वस्तुतः मम स्यूते न केवलं भल्लातकानि, खाद्यवस्तूनि, अन्यानि अपि आसन्। तथापि तानि दातव्यानि इति बुद्धिः मयि न उत्पन्ना। तत्त्वस्य कथनस्य अपेक्षया आचरणम् एव श्रेष्ठम्। किन्तु तथा कोऽपि प्रायः न करोति। अहम् एव अत्र उदाहरणम्' इति।

एतावत्पर्यन्तम् अभिरामः रामराजं



सामान्यदृष्ट्या पश्यन् आसीत्। इदानीं रामराजविषये गौरवं प्रवृद्धम्। सः रामराजस्य हस्तं स्वहस्तेन गृहीत्वा उक्तवान्- "मित्र! भवतः व्यवहारः श्लाघनीयः एव। आवाभ्याम् एकस्मिन् एव आपणे भल्लातकं क्रीतम् इत्येषः अंशः भवता लक्षितः स्यात् खलु?" इति

तदा मन्दं हसन् रामराजः उक्तवान्– "अहं सामान्यः कृषिकः। मम पत्नी गर्भिणी। तस्याः अपेक्षां पूरयितुम् अहं भल्लातकं क्रीतवान्। वस्तुतः तु तदा तदा भल्लातकं क्रेतुं मम सामर्थ्यं नास्ति" इति।

एतदनन्तरं रामराजः कूपसमीपं गत्वा मुखं प्रक्षाल्य जलं पीत्वा प्रत्यागतवान्। तत्समये शकटः प्रयाणार्थं सिद्धः आसीत्। प्रयाणम् अनुवृत्तम्। पुरुषोत्तमपुरे रामराजः शकटात् अवतीर्य अभिरामं कृतज्ञताम् उक्त्वा स्वगृहं गतवान्।

तं स्वागतीकृत्य तस्य पत्नी पृष्टवती– "भोः, भल्लातकम् आनीतवान्, उत विस्मृतवान्?" इति। रामराजः शिरश्चालनपूर्वकं 'न आनीतवान्' इति सूचयन् प्रवृत्तं समग्रतया निवेदितवान्।

"एवं वा! उचितम् एव कृतं भवता" इति वदन्ती तस्य पत्नी तस्य हस्ततः स्यूतं स्वीकृत्य वस्तूनि एकैकशः अधः स्थापितवती। एतन्मध्ये भल्लातकग्रन्थिं प्राप्य तं पत्यै प्रदर्शयन्ती– "किं भोः! न आनीतवान् इति विनोदार्थम् उक्तवान् वा? स्यूते भल्लातकग्रन्थिः अस्ति खलु?" इति पृष्टवती।

रामराजस्य महत् आश्चर्यम्। सः क्षणकालम् आलोच्य प्रवृत्तम् ऊहित्वा उक्तवान्– "एतत् मम सहप्रयाणिकस्य अभिरामस्य कार्यम् इति अहं भावयामि। याचकाय दानसमये भल्लातकक्रयणस्य कारणं मया तस्मै उक्तम् आसीत्। अहं यदा कूपसमीपं गतवान् तदा सः आत्मना क्रीतं भल्लातकं मम स्यूते स्थापितवान् इति भाति" इति।






तस्यां रात्रौ अक्रूरः बलरामकृष्णाभ्यां सह भोजनं कृत्वा ताभ्यां सह एव सुप्तवान्। शयनसमये अक्रूरः कृष्णम् उक्तवान् — "कृष्ण! जननसमनन्तरम् एव भवान् गोपपल्लीं प्राप्तवान् चेदपि एतावता भवतः वास्तविकः परिचयः सर्वैः प्राप्तः एव। एतादृशं सामान्यं जीवनं भवते न शोभते। वंशोचितं कार्यम् आचरणीयं भवता। पश्यतु, भवतः पिता वसुदेवः महात्मा। भवादृशः पुत्रः अस्ति चेदपि सः कंसात् भीतः सन् पदे पदे अवमाननं सहमानः, 'पुत्रम् अरण्यं प्रेषितवान् खलु' इति खेदम् अनुभवन् कष्टेन जीवति। कंसः अवाच्यैः शब्दैः सर्वेषां सम्मुखे वसुदेवं निन्दितवान्। वयम् असहायाः तत्सर्वं पश्यन्तः मौनं तिष्ठन्तः प्रतिदिनम् एकान्ते अश्रूणि स्रावयामः" इति। एवं कथनसमये अक्रूरस्य नेत्राभ्याम् अश्रूणि आगतानि, कण्ठः च अवरुद्धः।

क्षणकालानन्तरम् आत्मानं समाश्वस्य अक्रूरः कथनम् अनुवर्तितवान्। "भवतः मातुः देवकीदेव्याः दुःखम् वर्णनातीतम् अस्ति। तस्याः गर्भतः जातानि सर्वाणि अपत्यानि कंसः निर्दयं मारितवान्। तावन्ति अपत्यानि तया प्रसूतानि, किन्तु कमपि शिशुं सा स्तन्यं पाययितुं न शक्तवती। कृष्ण! सुन्दराङ्गस्य भवतः मुखं सा अद्यावधि न दृष्टवती। अहो दौर्भाग्यम्! तस्याः मातृत्वस्य सफलीकरणस्य भारः भवतः उपरि अस्ति। भवादृशं पुत्रं प्राप्य अपि सा अहर्निशम् अश्रूणि स्रावयन्ती अस्ति। एतदपेक्षया सा



वन्ध्या जाता चेदेव वरम् अभविष्यत् खलु? एतत्सर्वं जानन् अपि भवान् मौनम् आश्रित्य तिष्ठति खलु? किं वदामि अहम्?" इति सखेदं वदन् बहुधा हितम् उपदिष्टवान्।

अक्रूरस्य हितोपदेशः कृष्णस्य मनसि सम्यक् लग्नः। सः मनसि दृढं निश्चितवान् – "मथुरां गत्वा कंसः मारणीयः। तद्द्वारा मातापितरौ नागरिकाः च सन्तोषणीयाः। एतदेव मम आद्यं कर्तव्यम्" इति।

सूर्योदयः जातः। कृष्णः बलरामः च प्रातःकर्मादिकं समाप्य 'मथुरां गच्छावः' इति गोपगोपिकाः उक्त्वा रथम् आरूढवन्तौ। अक्रूरः सारथिस्थाने उपविश्य अश्वौ चोदितवान्। गोकुलम् अतिक्रम्य मथुरायाः मार्गम् अन्वसरत् रथः।

काश्चन गोपिकाः रथम् अनुसृत्य किञ्चिद्दूरं गतवत्यः। गोकुलतः कृष्णस्य निर्गमनं तासु काऽपि न इच्छति। तासु काश्चन अक्रूरं निन्दितवत्यः। अन्याः काश्चन– "इतः परं कोऽपि राक्षसः आक्रमणं कुर्यात् तर्हि कः रक्षिष्यति? कृष्णस्य गमनार्थम् अनुमतिः दत्ता यत् तत् मूर्खता एव" इति परितापं प्रकटितवत्यः।

पादाभ्यां गच्छन्त्यः ताः रथं कियद्दूरम् अनुसर्तुं शक्नुयुः? अन्ते श्रान्ताः ताः तत्रैव स्थित्वा वेगेन गच्छता रथेन उत्थाप्यमानां धूलिं दृष्टवत्यः।

यदा धूलिदर्शनम् अपि समाप्तम् तदा निराशया दीर्घं निःश्वसत्यः मन्दया गत्या प्रत्यागतवत्यः। गोकुले सर्वैः अपि इदानीं दिने अपि अन्धकारः अनुभूयते।

मध्याह्नसमये कृष्णादिभिः कालिन्दीतीरं प्राप्तम्। अक्रूरः रथं कदम्बवृक्षच्छायायां स्थापयन् बलरामकृष्णौ उक्तवान् – "अहं नदीं गत्वा स्नात्वा आह्निकादिकं समाप्य आगमिष्यामि। तावत् भवन्तौ रथे एव उपविश्य विश्रान्तिसुखम् अनुभवताम्। अश्वौ अपि तृणं खादन्तौ नवोत्साहं प्राप्नुताम्" इति।

अनन्तरं सः नद्यां मज्जनं कुर्वन् नद्याः मध्यभागं प्राप्तवान्।

एवं मज्जितवता अक्रूरेण नद्याः तले

रसातलः दृष्टः। तत्र सः स्वेच्छया सञ्चरतः वासुकि-कार्कोटकादीन् नागश्रेष्ठान् अपि दृष्टवान्। रत्नमये मण्डपे फणाः प्रसार्य स्थितवन्तं सहस्रमुखम् आदिशेषम् अपि सः दृष्टवान्। मण्डलाकारेण प्रसृतं तदीयं शरीरं श्वेतवर्णेन शोभते स्म। तदीयाः जिह्वाः विद्युद्रेखाः इव सञ्चरन्ति स्म। तस्य पार्श्वे उलूखलस्य हलस्य तालवृक्षस्य चिह्नैः अङ्किताः पताकाः आसन्। आदिशेषस्य शरीरस्य उपरि शयानः, नीलमेघश्यामः, कमलनेत्रः, पीताम्बरः कृष्णः तेन दृष्टः। एतत् दृष्ट्वा सः आनन्दपुलकितः अभवत्! रथे अपि एतादृशम् एव रूपं मया दृष्टं खलु इति आश्चर्यम् अनुभूतवान् सः।



एवं दृष्टं कृष्णं भक्त्या नमस्कृत्य अक्रूरः मन्त्रैः आराध्य विविधैः मानसिकैः पुष्पैः अर्चितवान्। नैवेद्यं नीराजनं च मानसिकरूपेण एव समर्पितवान्। एतेन तेन धन्यता भावः प्राप्तः।

अनन्तरं सः जलात् उद्गत्य रथे उपविष्टवन्तौ कृष्णं बलरामं च दृष्टवान्। रथे उपविष्टयोः बलरामकृष्णयोः शरीरे तेन कृतायाः मानसिकपूजायाः चिह्नानि आसन्। परमाश्चर्यम् अनुभवन् अक्रूरः पुनः अपि जले मज्जनं कुर्वन् रसातले आदिशेषं, तदुपरि शयानं कृष्णं च पुनः दृष्टवान्। इदानीं तस्य मनसि सन्देहः एव न अवशिष्टः।

भक्तिपरवशः अक्रूरः अनुष्ठानादिकं समाप्य रथम् आरूढवान्। तदा कृष्णः मन्दहासपूर्वकम् अक्रूरं पृष्टवान् – "अक्रूर! किमर्थम् एतावान् विलम्बः? पाताले कोऽपि विशेषः भवता दृष्टः वा? भवतः मुखे स्फुटं दृश्यमानम् आश्चर्यभावं दृष्ट्वा अहं तर्कयामि यत् भवता नदीतले किमपि अपूर्वं दृष्टं स्यात् इति" इति।

"देवाधिदेव! रथे मम समीपे भवान् उपविष्टः अस्ति इत्येव आश्चर्यस्य विषयः। एतेन एव रूपेण भवन्तौ नदीतले अपि दृष्टौ। भवतोः नैजं रूपं वर्णयितुं ब्रह्मणा अपि न शक्यते। मद्विषयकप्रीत्या भवान् मह्यं आत्मनः नैजं रूपं प्रदर्शितवान्। इतः परं विलम्बः न करणीयः। कंसः भवतोः दर्शनं कातरतया प्रतीक्षमाणः अस्ति। सूर्यास्ततः



पूर्वम् अस्माभिः नगरं प्राप्तव्यम्" इति उक्तवान् अक्रूरः।

तदा कृष्णः हसन् उक्तवान्— "आवाम् इदानीं भवतः अधीनौ स्वः। भवान् यथा इच्छति तथा करोतु। आवां तु पराधीनौ खलु" इति।

ततः वेगेन गतः रथः सूर्यास्तसमये मथुरा प्राप्नोत्। तदा कृष्णः अक्रूरम् उक्तवान्— "अक्रूर! अरण्यवासिनौ आवां नगरपरिसरं न जानीवः। आवयोः तु नगरदर्शने महत् कुतूहलम्। अतः इदानीम् एव नगरे किञ्चित्कालम् अटित्वा आगच्छावः। अनन्तरं महाराजस्य कंसस्य दर्शनं करिष्यावः। अस्तु वा?" इति।

अक्रूरः तौ रथात् अवतार्य— "वसुदेवस्य गृहं गन्तव्यम् इति भवतोः महती इच्छा स्यात्। किन्तु तथा न गन्तव्यम्। कंसस्य दर्शनम् अकृत्वा वसुदेवः दृष्टः चेत् कंसः कुपितः भवेत्, अनन्तरम् अनर्थः सम्भवेत् च" इति उक्त्वा तयोः नगरदर्शनार्थम् अनुमतिं दत्तवान्।

"आवयोः प्रतीक्षा मास्तु। आवां स्वयं कंससमीपम् आगमिष्यावः" इति अक्रूरं सूचितवान् कृष्णः।

बलरामकृष्णयोः आगमनवार्तां निवेदयितुम् अक्रूरः कंसस्य प्रासादस्य दिशि रथं प्रेरितवान्।

बन्धनमुक्तौ गजौ इव बलरामकृष्णौ मथुरानगरस्य राजवीथ्यां स्वेच्छया अटितवन्तौ। नगरे दृश्यमानानि नूतनानि दृश्यानि पश्यन्तौ तौ अग्रे गतवन्तौ। तेजस्विनोः नूतनयोः बलरामकृष्णयोः दर्शनेन पौराः परस्परं किमपि वदन्ति।

किञ्चिद्दूरं गमनानान्तरं रङ्गकारः नाम रजकः तयोः अभिमुखम् आगतवान्। तेन विविधानि अमूल्यानि वस्त्राणि शिरसि स्थापितानि आसन्।

"अये! आवां महाराजस्य दर्शनार्थं गच्छावः। राजसभां प्रति गमनसमये उत्तमानि वस्त्राणि धरणीयानि इति श्रुतम्। अतः भवत्समीपे विद्यमानेषु उत्तमानि वस्त्राणि आवाभ्यां ददातु। राजजनः खलु

भवान्" इति उक्तवान् कृष्णः।

कृष्णस्य वचनं श्रुत्वा रजकः अतीव कुपितः। "मुखदर्शनेन एव ज्ञायते यत् भवन्तौ गोपकुलोत्पन्नौ इति। अरण्यसञ्चारिणौ भवन्तौ उत्तमानि वस्त्राणि इच्छतः? अपसरताम्। कंसमहाराजाय दूरस्थैः राजभिः उपायनरूपेण प्रेषितानि एतानि वस्त्राणि। एतानि भवतोः अपेक्षितानि? एतेषाम् इच्छां परित्यज्य अग्रे गच्छताम्" इति उक्तवान् सः।



एतैः वचनैः कृष्णः क्षुपितः। सः झटिति खड्गम् आकृष्य रजकस्य कण्ठे खड्गेन रेखां लिखितवान्। तेन सः रजकः आक्रोशनम् कुर्वन् अधः अपतत्।

तस्य तु बह्व्यः पत्न्यः। पत्युः पतनं दृष्ट्वा ताः आक्रन्दनं कुर्वत्यः एतां वार्तां निवेदयितुं महाराजसमीपं धावितवत्यः।

कृष्णः रजकेन धृतं वस्त्रग्रन्थिम् उद्घाट्य पीतं वस्त्रं स्वयं धृतवान्। नीलवर्णीयं वस्त्रं बलरामाय दत्तवान्। अन्यानि वस्त्राणि गन्तृभ्यः दत्त्वा– "भीतिः मास्तु, धरन्तु" इति उक्तवान्।

ततः अग्रे गच्छन्तौ तौ मालाविक्रयण स्थलं प्राप्तवन्तौ।

तयोः अभिमुखं गुणकः नाम मालाकारः आगच्छन् आसीत्। कृष्णः तम् उत्तमाः मालाः दातुम् उक्तवान्। सः बलरामकृष्णौ सिद्धपुरुषौ मन्यमानः भक्त्या नमस्कृत्य– "स्वीक्रियताम्। एतानि पुष्पाणि भवदीयानि एव" इति उक्त्वा उत्तमाः मालाः पुष्पाणि च दत्तवान्।

ताः मालाः पुष्पाणि च शिरसि हस्ते कण्ठे च धृत्वा शोभमानौ तौ अग्रे गतवन्तौ।

राजवीथ्यां किञ्चिद्दूरम् अग्रे यदा गतं तदा सुगन्धद्रव्याणि उन्नीय काचित् कुब्जा सम्मुखम् आगतवती।

कृष्णः समीपं गत्वा तस्याः अवगुण्ठनम् अपसार्य तां पृष्टवान्– "एतानि सुगन्धद्रव्याणि कुत्र नयति?" इति।

"कंसमहाराजसमीपम्। सः एतावता स्नानं कृत्वा एतेषां सुगन्धद्रव्याणां प्रतीक्षां कुर्वन् तिष्ठति। अन्यैः निर्मितं सुगन्धं सः न



इच्छति। तदर्थं मया एव सुगन्धः सज्जीक्रियते। न जाने, तेन मया सज्जीक्रियमाणे सुगन्धद्रव्ये किं वैशिष्ट्यं दृष्टम् इति। विलम्बः जातः, मया त्वरया गन्तव्यम्'' इति उक्त्वा सा कुब्जा त्वरया गन्तुम् उद्युक्ता।

''तिष्ठतु अम्ब! सुदूरात् देशातः आगतौ मल्लौ आवाम्। कंसराजं, मथुरानगरीं, महाराजेन प्रचाल्यमानं धनुरुत्सवं च द्रष्टुम् अत्र आगतवन्तौ। भवत्याः हस्ते स्थितेन सुगन्धद्रव्येण नितराम् आकृष्टौ। एतेन सुगन्धद्रव्येण शरीरं लेपनीयम् इति आवयोः इच्छा। अतः कृपया तत् ददातु। तेन शरीरं लिप्त्वा राजसभायां सगम्भीरं उपवेक्ष्यावः'' इति उक्तवान् कृष्णः।

तदा मन्दहासं प्रकटयन्ती सा कुब्जा– ''भवतोः दर्शनानन्तरं कंसात् भीतिः एव अपगता। न जाने, किं कारणम् इति'' इति वदन्ती सुगन्धद्रव्यपात्रं दत्तवती।

कृष्णः प्रथमं बलरामाय किञ्चित् दत्त्वा, अनन्तरं आत्मानम् अपि अलङ्कृत्य अवशिष्टं समीपस्थेभ्यः बालेभ्यः दत्तवान्।

कुब्जा समीकरणीया इति विचारः कृष्णस्य मनसि आगतः। अतः सः पादाङ्गुष्ठेन तस्याः पादं नोदयन् तर्जन्या तस्याः मुखम् उन्नीतवान्। तदा तस्याः शरीरं ऋजु जातम्। सा सुन्दरी कृशाङ्गी जाता।

सा ऋजुभूतौ पादौ, ऋजुभूतं पृष्ठम्, उन्नतं कायं च दृष्ट्वा सन्तोषम् अनुभवन्ती– ''वत्स! सुन्दररूपदानेन भवान् मां बहुधा उपकृतवान्। मया नवजीवनं प्राप्तम् इव। अतः मम गृहम् आगत्य मां कृतार्थां करोतु। एवम् एव भवतः गमनम् अहं सर्वथा न अङ्गीकरोमि'' इति साग्रहम् उक्त्वा तस्य हस्तं गृहीतवती।

''इदानीं मया त्वरया अन्यत्र गन्तव्यम्। भवती मदीया एव। पुनः कदाचित् भवत्याः गृहम् आगमिष्यामि'' इति उक्त्वा कृष्णः मधुरैः वचनैः ततः विमोचनं प्राप्य बलरामेण सह अग्रे गतवान्।

अनन्तरम् अन्यत्र अटनम् अनिच्छन्तौ तौ साक्षात् कंसस्य प्रासादस्य द्वारप्रदेशं

प्राप्तवन्तौ। तत्र महान् कोलाहलः दृश्यते स्म।

विविधदेशीयैः राजभिः उपायनरूपेण प्रेषितानि सुवर्णाभरणादीनि, रथाः, अश्वाः, गजाः, अपूर्वाणि शिल्पानि, अन्यानि च निरन्तरम् आगच्छन्ति एव आसन्! अहो वैभवं कंसमहाराजस्य!

मुखद्वारस्य अनन्तरम् आयुधागारम् आसीत्। सुवर्णपटलैः आच्छन्नं तत् विविधैः अमूल्यैः मणिभिः अलङ्कृतम् आसीत्। तत् द्रष्टुं विविधाः राजानः तत्र सम्मिलिताः आसन्। तस्य रक्षणार्थं बहवः भटाः नियुक्ताः दृश्यन्ते स्म।

"कंसमहाराजस्य धनुः अत्रैव अस्ति वा? तस्य दर्शनार्थम् आवां सुदूरात् आगतवन्तौ। तत् कुत्र? आवां द्रष्टुम् अर्हावः वा?" इति मुग्धस्वरेण पृष्टवन्तौ बलरामकृष्णौ। तदा भटाः तौ धनुषः समीपं नीतवन्तः। तच्च धनुः बृहदाकारकम् आसीत्। सर्पः तक्षकः इव भीकरतया दृश्यते स्म तत्।

तत् दृष्ट्वा कृष्णः– "एतत् उन्नीय ज्यां बद्ध्वा ठङ्कारपूर्वकं बाणं योजयितुं देवादिभिः अपि न शक्यते इति मया श्रुतम्। तत् सत्यं वा इति पश्यामि तावत्" इति वदन् अनायासेन दण्डम् इव धनुः उन्नीय ज्याम् आकृष्य ठङ्कारं कृतवान्। स च ठङ्कारः तरङ्गरूपेण प्रसरन् चतसृषु दिक्षु व्याप्नोत्। तत्रत्याः सर्वे कृष्णम् आश्चर्येण दृष्टवन्तः। तावता कृष्णः धनुः मुष्ट्या दृढं गृहीत्वा सशब्दं भञ्जितवान्।

यस्य निमित्तं सवैभवम् उत्सवः आचरणीयः इति कंसः चिन्तयन् आसीत् तच्च धनुः त्रिधा भग्नम् अभवत्।

कृष्णः तु एतत् किमपि अजानन् इव मन्दं जनसमूहं प्रविश्य ततः मौनं बहिः आगतवान्।

आयुधागारस्य रक्षणे नियुक्ताः भटाः सम्भ्रमेण धावन्तः कंससमीपं गत्वा भीत्या कम्पमानाः क्षीणस्वरेण प्रवृत्तं सर्वं निवेदितवन्तः।





# वृकः माण्डलिकः

ब्रिटनीयदुर्गे कश्चन माण्डलिकः आसीत्। युवकस्य एतस्य माण्डलिकस्य विषये महाराजस्य विशेषादरः। माण्डलिकस्य पत्नी परमसुन्दरी, साध्वी इव व्यवहरति च। तस्याः कार्याणि, वचनानि च साधुत्वं प्रकटयन्ति स्म। अतः एषः माण्डलिकः तां प्रीत्या आदरेण च पश्यति।

वस्तुतः तु तस्याः स्वभावे द्वैविध्यम् आसीत्। तस्याः मनः अन्यस्मिन् माण्डलिके लग्नम् आसीत्। प्रियस्य समागमार्थं सा अवकाशं प्रतीक्षमाणा मनसि एव तप्यमाना च आसीत्।

विवाहानन्तरम् अल्पेषु एव मासेषु सा पत्युः व्यवहारे एतत् लक्षितवती यत् सः सप्ताहे दिनत्रयं कुत्रापि गत्वा आगच्छति इति। 'एवं गमने किमपि रहस्यम् अस्ति। तत् ज्ञातं चेत् तेन किमपि स्वलाभं सम्पादयितुं शक्नुयाम्' इति सा आलोचितवती। 'एतत् रहस्यं पतिः सुलभतया न वदेत्' इत्यपि जानाति स्म सा।

तथापि सा एकदा पतिं पृष्टवती– "आर्य! प्रतिसप्ताहम् अपि भवान् दिनत्रयं कुत्रापि गमिष्यति। तदा एकाकितया निवसन्त्याः मम कियान् खेदः भवति इति भवान् जानाति वा? इतोऽपि कियत्कालम् एतत् सङ्कटम् अनुभोक्तव्यं मया?" इति।

तदा पतिः उक्तवान्– "अहं किं करोमि? मया अनिवार्यतया तथा गन्तव्यम् एव। अन्यः मार्गः एव नास्ति। वस्तुतः भवतीम् एकाकिनीं परित्यज्य गन्तुं ममापि इच्छा नास्ति। किन्तु अनिवार्यं खलु? भवत्या अपि एतत् कष्टं कथञ्चित् सोढव्यम्" इति।

"तादृशं कार्यं किं तत्? माम् अपि वदतु तावत्। अहं भवतः अर्धाङ्गिनी खलु? यथा

"फ्रान्सुदेशस्य जानपदकथा"



सुखे तथैव दुःखे अपि मम सहभागः अस्ति एव" इति अश्रूणि स्रावयन्ती अनुनयपूर्वकम् उक्तवती पत्नी।

"तच्च परमरहस्यम्। अन्यः कश्चित् यदि जानीयात् तर्हि मम वेषभूषादयः मया न प्रतिप्राप्येरन्, तथा चेत् मया वृकरूपेण एव स्थातव्यं भवेत्" इति उक्तवान् माण्डलिकः।

एतत् श्रुतवत्याः तस्याः दुष्टायाः महान् सन्तोषः जातः। तथापि खेदम् अनुभवन्ती इव अभिनयन्ती सा वेषभूषादीनां स्थापनस्य स्थानं पुनः पुनः आग्रहेण पृष्टवती। तस्याः तादृशीं प्रीतिं वास्तविकीं मन्यमानः सः उक्तवान् – "अरण्ये कश्चन प्राचीनः देवालयः अस्ति। तस्य पार्श्वे गुल्मानां मध्ये कस्यचित् शिलाफलकस्य अधः मदीयानि वेषभूषणानि स्थापयामि। दिनत्रयं वृकरूपेण स्थित्वा पुनः एतानि वेषभूषादीनि धरन् नैजं रूपं प्राप्नोमि च" इति।

पत्युः अपसारणे अपायरहितः मार्गः इदानीं तया ज्ञातः। एतदनन्तरसप्ताहे यदा माण्डलिकः अरण्यं गतवान् तदा एषा स्वप्रियकरम् आहूय पत्युः सम्बन्धि रहस्यं निवेदितवती।

तस्याः सूचनानुसारं सः प्रियकरः प्राचीनदेवालयस्य समीपं गत्वा शिलाफलकस्य अधः स्थितानि माण्डलिकस्य वेषभूषादीनि आनीय तस्यै दत्तवान्। 'तानि अग्नौ स्थापनीयानि' इति सा प्रथमं चिन्तितवती। किन्तु अनन्तरक्षणे तं विचारं परित्यज्य कस्याञ्चित् पेटिकायां स्थापितवती।

वृकरूपी माण्डलिकः दिनत्रयानन्तरं शिथिलदेवालयसमीपम् आगत्य वेषभूषादिकम् अन्विष्टवान्। किन्तु तत् तत्र न आसीत्। पत्न्या आचरितः विश्वासद्रोहः इदानीं तेन ज्ञातः। इदानीं विवेकप्राप्त्या किं प्रयोजनं, यतः अकार्यं तु प्रवृत्तम् एव। 'इतः परम् आजीवनं वृकजीवनम् एव शरणं खलु?' इति सः बहुधा खेदम् अनुभूतवान्।

इदानीं सः कामपि प्रतिक्रियां प्रदर्शयितुं न शक्नोति। यतः वृकरूपेण स्थितः सः अरण्यप्रान्तम् अतिक्रम्य यदि गच्छेत् तर्हि

शुनकाः मानवाः च तं गतप्राणं कुर्युः।

केषाञ्चित् दिनानाम् अनन्तरं माण्डलिकस्य पत्नी – "कुत्रापि गतः मम पतिः न आगतः" इति वदन्ती कृतकरूपेण अश्रूणि स्रावितवती। पुनः अल्पे एव काले प्रियकरं परिणीय 'मम उपायः फलितः' इति सन्तोषम् अनुभूतवती च।

एतदनन्तरम् एकवर्षपर्यन्तं माण्डलिकः वृकरूपेण एव अरण्ये सञ्चरन् प्राणिनः खादन् जीवितवान्।

एवं स्थिते एकदा महाराजः मृगयार्थम् अरण्यम् आगतवान्। तेन सह मृगयाकुशलाः शुनकाः अपि आसन्। ते शुनकाः वृकस्य गन्धम् आघ्राय अनुसृत्य आगतवन्तः। शुनकानां पृष्ठतः राजा अश्वम् आरुह्य आगच्छन् आसीत्। केचन भटाः तम् अनुसरन्ति स्म। प्रथमदर्शनेन एव वृकरूपी माण्डलिकः महाराजस्य परिचयं प्राप्तवान्।

शुनकैः आत्मानं रक्षन् वृकः अग्रे अधावत्। सायङ्कालपर्यन्तं धावनेन श्रान्तः सः आत्मनः मरणं निश्चित्य एकत्र मौनम् अतिष्ठत्।

शुनकाः भटाः च वृकस्य अतिसमीपम् आगतवन्तः। अत्रान्तरे वृकस्य मौनस्थितिं दृष्ट्वा राजा भटान् आज्ञापितवान् – "तं न मारयन्तु। सः तदेकदृष्ट्या माम् एव पश्यन् अस्ति। अतः अहं तस्य विषये चिन्तयिष्यामि" इति। भटाः तत्रैव तिष्ठन्तः



शुनकान् निगृहीतवन्तः।

वृकः पालितः शुनकः इव राजसमीपं गत्वा राज्ञः पादस्य उपरि स्वमुखं स्थापयन् विनयेन अतिष्ठत्।

वृकस्य एतं विचित्रं व्यवहारं दृष्ट्वा आश्चर्यम् अनुभवन् राजा उक्तवान् – "किम् एतत् आश्चर्यम्! एषः वृकः मां शरणं गच्छति! एतम् अरण्ये एवं एव त्यजाम। एषः साधुस्वभावयुतः, बुद्धिशक्तियुतश्च इति भाति। अतः भवन्तः शुनकैः सह अग्रे गच्छन्तु" इति।

राज्ञा उन्मुक्तः चेत् अपि वृकः दूरं न अगच्छत्। सः राजानम् अनुसरन् अश्वस्य पार्श्वे एव अचलत्।

एवं राजभवनपर्यन्तम् अपि आगतवन्तं



वृकं दृष्ट्वा राजा आज्ञापितवान् – "एषः मम रक्षणम् इच्छति इति भाति। एषः अत्रैव तिष्ठतु नाम। अद्य आरभ्य एतस्य मांसाहारादिकं व्यवस्थाप्य जागरूकतया पश्यन्तु। कोऽपि केनापि प्रकारेण एतस्य हिंसनं न कुर्यात्" इति।

तद्दिनतः सः वृकः राजभवने निवसन् पालितः शुनकः इव राजानं सदा अनुसरति स्म। कदापि कमपि न पीडयति स्म। दिने राज्ञा सह अटन् रात्रौ राज्ञः मञ्चस्य पार्श्वे एव शयनं करोति स्म।

दिनेषु गच्छत्सु शुनकानाम् अपेक्षया वृकस्य विषये एव राज्ञः विशेषप्रीतिः अवर्धत।

महाराजः कदाचित् विशेषकार्यनिमित्तं सर्वान् माण्डलिकान् सूचितवान् यत् सर्वैः राजभवने उपस्थातव्यम् इति। एवम् उपस्थितेषु माण्डलिकेषु वृकरूपिणः माण्डलिकस्य वस्त्रम् अपहृतवत्याः प्रियकरः अपि अन्यतमः आसीत्। तं दृष्ट्वा वृकः गुर्गुरायमाणः तस्य उपरि आक्रमणम् अकरोत्। तं पातयित्वा तस्य कण्ठं मुखेन अगृह्णात् च। तावता अन्ये आगत्य वृकं ततः निवारितवन्तः। तद्दिने एषा एव घटना त्रिवारं प्रवृत्ता। एतत् दृष्टवतः महाराजस्य महत् आश्चर्यम्। पालितः शुनकः इव व्यवहरन् एषः वृकः तस्य माण्डलिकस्य विषये किमर्थम् एवं व्यवहरति इति समस्या महाराजस्य। 'वृकः त्रिवारं माण्डलिकं मारयितुम् उद्युक्तः अभवत्। कदाचित् वृकः तं मारयेत् अपि। अथवा माण्डलिकाः एव वृकं मारयेयुः। एतत् उभयम् अपि न भवेत्' इति आलोच्य महाराजः माण्डलिकानां निर्गमनपर्यन्तं तं वृकं शृङ्खलया बद्ध्वा स्थापितवान्।

एतदनन्तरं कदाचित् महाराजः मृगयार्थं गतः अरण्ये विश्रान्तिगृहे स्थितवान्। तच्च विश्रान्तिगृहं वृकरूपिणः माण्डलिकस्य एव। महाराजस्य आगमनं ज्ञात्वा वृकरूपिणः माण्डलिकस्य पत्नी स्वद्वितीयपतेः हितं साधयितुम् इच्छन्ती उपायनैः सह महाराजस्य दर्शनार्थं विश्रान्तिगृहम् आगतवती।

यदा सा महाराजस्य पुरतः आगतवती तदा

राजपार्श्वे स्थितः वृकः झटिति तस्याः उपरि आक्रमणम् अकरोत्। तदा सा विकृतेन ध्वनिना आक्रोशनं कृतवती। तं ध्वनिं श्रुत्वा पार्श्वस्थाः सर्वे खड्गम् उन्नीय आगतवन्तः। महाराजेन ते निवारिताः यदि न स्युः तर्हि वृकः तैः मारितः अभविष्यत्।

राजा बाहुद्वयेन वृकम् आलिङ्ग्य खड्गहस्तानां भटानां प्रहारं निवारयन् आज्ञापितवान् – "एतस्याः प्रथमः पतिः मम आत्मीयः* आसीत्। तस्य का गतिः, सः कुत्र अस्ति इति केनापि न ज्ञायते। एतस्याः द्वितीयः पतिः एतां सिंहासनं चापि आत्मसात्कृतवान् अस्ति। परमसज्जनः एषः वृकः केवलम् एतयोः विषये क्रोधं प्रदर्शयति। अतः सर्वप्रथमम् एतौ कारागारे स्थापनीयौ। तदा एव वस्तुस्थितिः ज्ञाता भवेत्" इति। भटाः राजाज्ञां निर्वर्तितवन्तः।

वृकरूपिणः माण्डलिकस्य पत्नी काश्चन दिनानि कारागारवासानन्तरं महाराजस्य पुरतः प्रवृत्तं निवेद्य अश्रूणि स्रावयन्ती क्षमां प्रार्थितवती। "वेषभूषणादीनि कस्याञ्चित् पेटिकायां स्थापितानि सन्ति" इत्यपि निवेदितवती सा।

राजा भटद्वारा तानि वेषभूषणादीनि आनायितवान्। कस्मिंश्चित् प्रकोष्ठे तानि स्थापयित्वा वृकम् अपि अन्तः प्रेषयित्वा द्वारपिधानं कारितवान्। किञ्चित्कालानन्तरं द्वारताडनशब्दस्य श्रवणानन्तरं द्वारं यदा उद्घाटितं तदा वृकस्थाने माण्डलिकः स्थितः आसीत्।

महाराजः दुष्टां तस्य पत्नीं, तस्याः प्रियकरं च देशात् बहिष्कृतवान्। माण्डलिकाय तदीयम् ऐश्वर्यं दापितवान् च। किन्तु स च माण्डलिकः स्वदुर्गं परित्यक्तवान्। सप्ताहे चत्वारि दिनानि मानवरूपेण, त्रीणि दिनानि वृकरूपेण च राजभवने एव वसति स्म च।

तानि वेषभूषणादीनि तेन माण्डलिकेन परम्परया प्राप्तानि। दिनत्रयं यावत् वृकरूपेण स्थातव्यम् इति तदीयेन पित्रा सशपथं सूचितम् आसीत्।





# विवेचनशील:

देवगिरिराज्यं विक्रमसिंहः पालयन् आसीत्। तस्य आस्थाने युगन्धरः नाम मन्त्री शशिवर्मा नाम सेनापतिः च आस्ताम्। मन्त्री अद्वितीयः मेधावी। सेनापतिः तु अप्रतिमः शूरः। अतः देवगिरिराज्यं शत्रुभीतितः मुक्तम् आसीत्। राज्ये सुभिक्ष सुखशान्त्यादयः न आसन्।

एकदा सेनापतिः शशिवर्मा अकस्मात् हृद्रोगपीडितः सन् अकालमरणं प्राप्तवान्। शशिवर्मणः स्थाने अन्यः नियोजनीयः आपतितः।

राजा मन्त्रिणा युगन्धरेण समालोच्य 'सेनापतिपदवीं प्राप्तुम् इच्छवः शूराः आगच्छन्तु' इति उद्घोषितवान्। एतत् श्रुत्वा युद्धविद्यायां प्रवीणाः बहवः योधयुवकाः अग्रे आगतवन्तः। एवम् आगतानां सामर्थ्यस्य परीक्षणार्थं विविधाः स्पर्धाः आयोजिताः।

अश्वारोहणं, मल्लयुद्धं, दण्डयुद्धं, खड्गयुद्धम् इत्यादयः स्पर्धाः प्रवृत्ताः। एतासु बहवः पराजयं प्राप्तवन्तः। निखिल-निशाङ्कनामकौ तु सर्वासु स्पर्धासु समानतया प्रतिभां प्रदर्शितवन्तौ।

तयोः सामर्थ्ये कोऽपि भेदः न लक्ष्यते स्म। अनयोः अन्यतरः सेनापतिः भवितुम् अर्हति। किन्तु तादृशः कः इति तु निर्णेतव्यम्।

विक्रमसिंहः मन्त्रिणः युगन्धरस्य सूचनानुसारं तयोः धनुर्विद्यासामर्थ्यस्य परीक्षणार्थं व्यवस्थां कृतवान्। उन्नतयोः अर्जुनवृक्षयोः अन्तिमशाखायाम् एकैकं वस्तु स्थापितम्। तयोः वस्तुनोः प्रतिबिम्बम् अधः स्थापितयोः दर्पणयोः दृश्यते स्म। तत् दृष्ट्वा बाणप्रयोगेण लक्ष्यस्य छेदनं करणीयम् आसीत्।



निखिलः निशाङ्कः च युगपत् एव धनुः उन्नीतवन्तौ। निखिलः लक्ष्यं सुपरीक्ष्य बाणप्रयोगं कुर्वन् क्षणत्रयाभ्यन्तरे लक्ष्यभूतं वस्तु पातितवान्।

निशाङ्कस्तु दर्पणे लक्ष्यस्य प्रतिबिम्बं पश्यन् बाणं जागरूकतया चालयन् लक्ष्यभेदनं कृतवान्। किन्तु तदर्थं पञ्चाधिकाः क्षणाः तेन व्ययिताः।

"निखिलः एव सेनापतिः भवितुम् अर्हति" इति युगन्धरं सन्तोषेण उक्तवान् राजा विक्रमसिंहः।

"क्षाम्यतु महाराज! भवतः अभिप्रायः युक्तः न इति अहं भावयामि। निशाङ्कः एव सेनापतिः भवितुं योग्यः" इति उक्तवान् मन्त्री युगन्धरः।

"किमर्थं तथा चिन्तयति भवान्? निखिलः तु अविलम्बेन लक्ष्यभेदनं कृतवान्। निशाङ्कः बाणाग्रम् इतस्ततः चालयन् विलम्बेन लक्ष्यभेदनं कृतवान्। अतः निखिलस्य एव नैपुण्यम् अधिकम् इति सिद्धं खलु?" इति पृष्टवान् विक्रमसिंहः।

तदा मन्त्री युगन्धरः उक्तवान्– "प्रभो! निशाङ्कः लक्ष्यभेदनार्थम् अधिकसमयं स्वीकृतवान् इत्यस्य अर्थः सः न्यूनसामर्थ्यवान् इति न। लक्ष्यपातनसमये एकं पत्रम् अपि न पतेत् इति उद्देशेन सः तथा कृतवान्। केवलं लक्ष्यभूतं वस्तु पातितवान् अपि। निखिलः अविलम्बेन लक्ष्यभेदनं कृतवान् चेदपि पत्राणि शाखां च पातितवान्। अतः निखिलस्य अपेक्षया निशाङ्कः एव समर्थः। कार्यदक्षता विवेचनं च तस्मिन् अस्ति। निखिले दक्षता दृश्यते, विवेचनं न्यूनम्" इति।

विक्रमसिंहः मन्त्रिणा उक्तं वचनं मनसि एव विमृशन् क्षणकालं मौनं स्थितवान्।

तदा मन्त्री पुनः उक्तवान्– "महाराज! एवं तर्हि अन्यां परीक्षाम् आयोजयाम। तस्यां भुजबलस्य बुद्धिबलस्य च परीक्षा यथा स्यात् तथा व्यवस्थापयाम। तदा विवेचनशक्तिः सुस्पष्टतया ज्ञाता भविष्यति" इति।

विक्रमसिंहः सन्तोषेण एतदर्थम् अनुमतिं दत्तवान्।

युगन्धरः तत्क्षणे एव परशुद्वयम् आनायितवान्। निखिलस्य निशाङ्कस्य च हस्ते एकैकं परशुं दत्त्वा पुरतः स्थितयोः अर्जुनवृक्षयोः छेदनार्थम् आदिष्टवान्। द्वयोः अपि वृक्षयोः स्थौल्यं तु समानम् आसीत्। 'यः वृक्षच्छेदनं प्रथमं समापयति स एव सेनापतिः भविष्यति' इति तौ सूचितवान् मन्त्री।

निखिलः परशुप्राप्तेः समनन्तरम् एव उत्साहेन वृक्षं छेत्तुम् आरब्धवान्। निशाङ्कः तु परशुं स्वीकृत्य प्रथमं तस्य धारां परीक्षितवान्।

परशुधारा तीक्ष्णा नास्ति इति सः ज्ञातवान्। अतः शिलया परशुं घर्षयन् परशोः तीक्ष्णीकरणे सः मग्नः अभवत्।

एवं कश्चन कालः अतीतः। एतत्समये निखिलः अर्धाधिकं भागं कर्तितवान् आसीत्। निशाङ्कः तु परशोः तीक्ष्णीकरणे एव मग्नः अस्ति इदानीम् अपि।

राजा विक्रमसिंहः आश्चर्येण निखिल-निशाङ्कयोः व्यवहारं पश्यन् अस्ति। मन्त्री युगन्धरः निशाङ्कस्य व्यवहारं साभिमानं पश्यति।

परशुः पर्याप्तमात्रेण तीक्ष्णा जाता इति निश्चित्य निशाङ्कः वृक्षस्य च्छेदनम् आरब्धवान्।

एतावति काले निखिलस्य भुजबलं क्षीणं जातम् आसीत्। तस्य प्रहाराः इदानीं दुर्बलाः। सः नितरां श्रान्तः अपि।

निशाङ्कः विशेषप्रयासं विना निरन्तरं परशुप्रहारं कुर्वन् अल्पे एव काले वृक्षं पातितवान्। निखिलः तु अर्धं कर्तितस्य वृक्षस्य मूले आयासेन लज्जया च उपविष्टवान्।

राजा विक्रमसिंहः मन्त्रिणः युगन्धरस्य विवेचनम् अभिनन्द्य उत्थाय निशाङ्कं प्रीत्या आलिङ्गितवान्।

निशाङ्कः तद्दिने एव सेनापतिस्थाने नियुक्तः अभवत्। स्पर्धासु ये विशेषकौशलं प्रदर्शितवन्तः ते तत्तद्योग्यतानुगुणम् उचिते अधिकारे नियुक्ताः अभवन्।





# प्रेताम्बा

मल्लेशः नाम कश्चित् वलयविक्रयणं कुर्वन् जीवति स्म। ग्रामस्य अन्ते अल्पे गृहे पत्नीपुत्रादिभिः सह सः निवसति। एतत् गृहं पित्रार्जितम्। एतदतिरिच्य तदीया सम्पत्तिः नाम एका धेनुः, केचन कुक्कुटाः च।

मल्लेशः उषःकाले एव उत्थाय गोदोहनं कृत्वा धेनोः पुरतः तृणानि स्थापयित्वा पूर्वदिनस्य अन्नं भुङ्क्ते। मध्याह्ननिमित्तं पाथेयं गृहीत्वा वलयगुच्छं स्कन्धे आरोप्य वाणिज्यार्थं गृहात् प्रस्थानं करोति। सायङ्कालपर्यन्तं ग्रामेषु अटित्वा विक्रयणं कृत्वा सूर्यास्तसमये गृहं प्रत्यागच्छति।

एकदा मल्लेशः मध्याह्नसमये भोजनार्थम् एकस्य वृक्षस्य अधः उपविष्टवान्। अल्पविश्रान्त्यनन्तरं समीपस्थं कूपं गत्वा जलम् आनीतवान्। अनन्तरं वृक्षस्य अधः उपविश्य भोजनं कृतवान्। शिष्टम् अन्नादिकं 'शुनकादयः खादन्तु नाम' इत्यालोच्य तत्रैव त्यक्त्वा अग्रे गतवान्।

मल्लेशस्य गमनसमनन्तरम् एव कश्चन पिशाचः तत्र आगतः। तेन पूर्वं यत्र वासः क्रियते स्म स च वृक्षः पतितः आसीत्। नूतनं वासस्थानम् अन्विष्यन् सः अत्र आगतः आसीत्। मल्लेशेन त्यक्तम् अन्नम् अवलेहादिकं च पिशाचेन दृष्टम्। तस्य बुभुक्षा तु आसीत् एव। अतः तानि सः सन्तोषेण अखादत्। तावता सः न तृप्तः। पत्रावलीम् अपि आशया लिहन् अन्ते अङ्गुलीस्थं रसशेषम् अपि लीढवान्।

एतावत्पर्यन्तं तेन पिशाचेन अपक्वमांसस्य रक्तस्य च रुचिः दृष्टा आसीत्, न तु अन्यविधस्य आहारस्य। मनुष्यैः सेव्यमानस्य आहारस्य रुचिः इदानीं तेन ज्ञाता। 'इतःपरम् एतादृशम् आहारं सेवता मया मनुष्यैः इव व्यवहरणीयम्' इति

"पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा"



आलोचयत् सः पिशाचः। अतः वलयविक्रयिकस्य मल्लेशस्य प्रतीक्षां कुर्वन् सः पिशाचः तत्रैव अतिष्ठत्।

मल्लेशः विक्रयणं समाप्य सायङ्काले गृहाभिमुखं गच्छन् तस्य वृक्षस्य समीपम् आगतवान्। वलयग्रन्थिं वृक्षमूले संस्थाप्य कूपं गत्वा जलम् उद्धृत्य मुखं प्रक्षाल्य जलं पीतवान्। तत्समये तेन कस्याश्चित् रोदनशब्दः श्रुतः। सः तस्यां दिशि दृष्टिं प्रसारितवान्। वृक्षस्य अधः उपविश्य रुदती काचित् स्त्री तेन दृष्टा।

तस्याः समीपं गत्वा मल्लेशः पृष्टवान्– ''का भवती? किमर्थम् एवं रोदिति?'' इति।

''अहं सुदूरतः आगता अस्मि। मम पतिः अनुक्त्वा मां त्यक्त्वा गतवान्। उदरम्भरणोपायं न पश्यामि अहम्। आश्रयदाता कोऽपि नास्ति। कुत्र गच्छेयम्? किं वा कुर्याम्? इत्येव समस्या'' इति दीनस्वरेण उक्तवती सा स्त्री।

''हा हन्त! भवती चिन्तां मा करोतु। मम गृहम् आगच्छतु। यावच्छक्ति गृहकार्येषु साहाय्यं करोतु। वेतनं किमपि दातुं न शक्नोमि, पूर्णोदरं भोजनं तु दास्यामि। यदा पत्युः निवासस्थानं ज्ञायते तदा गन्तुम् अर्हति भवती'' इति उक्तवान् मल्लेशः।

पिशाचः अपि एतत् एव इच्छति खलु? अतः सः अवदत्– ''हन्त! देवो दयालुः। यानि अहं कर्तुं शक्नुयां तानि मद्द्वारा कारयितुम् अर्हति भवान्। मया कर्तुम् अशक्यं कार्यं यदि वदेत् तर्हि तत्क्षणे अहं निर्गच्छेयम्। अनन्तरकाले अन्यथाभावः मास्तु इति उद्देशेन इदानीम् एव सर्वम् उक्तवती'' इति।

एतं नियमम् अङ्गीकृत्य मल्लेशः स्त्रीरूपिणं तं पिशाचं स्वगृहं नीतवान्। पत्युः मुखात् सर्वं वृत्तान्तं श्रुत्वा पत्नी तां पृष्टवती– ''भवत्याः नाम किम्?'' इति।

''प्रेताम्बा इति मम नाम'' इति उक्तवती सा। बाल्ये विनोदार्थं केनचित् एतादृशं विचित्रं नाम निश्चितं स्यात् इति भावितवती मल्लेशस्य पत्नी।

अनन्तरदिनतः प्रेताम्बा गृहकार्येषु साहाय्यं कर्तुम् आरब्धवती। प्रातः उत्थाय सम्मार्जनं कृत्वा सा रङ्गवल्लीं लिखति।

मल्लेशः दोहनं यदा समापयति तदा एषा धेनुं वत्सं च चारणार्थं नयति। यदा यदा समयं प्राप्नोति तदा सर्वदा पाकादिषु मल्लेशस्य पत्न्याः साहाय्यं करोति।

एकदा मल्लेशः रात्रौ विलम्बेन आगत्य द्वारशब्दं कृतवान्। तत्समये मल्लेशस्य पत्नी प्रेताम्बा च निद्रावशंगते आस्ताम्। शैत्यकारणतः सम्यक् आच्छादितम् आसीत् अपि। मल्लेशस्य पत्नी मञ्चे शयनं करोति स्म। प्रेताम्बा भूमौ कटं प्रसार्य तस्याः पार्श्वे शयनं कृतवती आसीत्।

द्वारताडनशब्दं श्रुत्वा मल्लेशस्य पत्नी शयाना एव प्रेताम्बाम् उक्तवती– "मम पतिः आगतः इति भाति। उत्थाय द्वारम् उद्घाटयतु" इति।

प्रेताम्बा 'अस्तु' इति उक्त्वा कटे शयाना एव एकं हस्तं द्वारशृङ्खलापर्यन्तं प्रसार्य द्वारम् उद्घाटितवती। एतत् मल्लेशस्य पत्न्या अपि दृष्टम्। भीतायाः तस्याः प्राणाः निर्गताः इव। तथापि सा उद्गच्छत् आक्रोशनम् आत्मनि एव निगृह्य रात्रिं यापितवती। प्रातः उत्थाय पतिम् एकान्ते आहूय प्रवृत्तं सर्वं निवेद्य सूचितवती– "केनापि उपायेन तां गृहात् निष्कासयतु। सा मनुष्या एव न। अन्वर्थनाम्नी सा पिशाचकुलोत्पन्ना एव। तां कथम् अपि इतः प्रेषयतु" इति।

मल्लेशः पत्न्याः वचनम् आरम्भे न



अङ्गीकृतवान्। किन्तु यदा सम्यक् आलोचितं तदा तस्य मनसि सन्देहः उत्पन्नः।

गतायां रात्रौ यदा सः गृहम् आगतः तदा तदीया पत्नी सुप्ता आसीत्। प्रेताम्बा अपि तथैव। उद्घाटनसमनन्तरम् एव तेन अन्तः आगतम्। अतः कस्याश्चित् अपि द्वारम् उद्घाटितवत्याः ततः पूर्वं शयनम् असम्भवम् एव। एवं च सिद्धं यत् सा प्रेताम्बा अमानुषी एव इति। मल्लेशस्य पत्नी तु प्रेताम्बायाः दर्शनात् अपि भीता भवति। किन्तु केन व्याजेन सा प्रेषणीया इत्येव समस्या मल्लेशस्य। बहुधा चिन्तनानन्तरं सः प्रेताम्बया यत् उक्तम् आसीत् – असाध्यं कार्यं वक्ष्यति चेत् तत्क्षणे एव निर्गच्छेयम् इति, तत् स्मृतवान्।

सः प्रेताम्बाम् उक्तवान्– "भोः, मम गृहं परितः विशालः अवकाशः अस्ति खलु? तत्र सस्यानि आरोपणीयानि इति मम विचारः अस्ति। सस्यारोपणतः पूर्वं दृढः प्राकारः निर्मातव्यः खलु? तादृशं प्राकारं निर्मातुम् अर्हति वा भवती?" इति।

'मया एतत् न शक्यते' इति प्रेताम्बया न उक्तम् एव। अस्तु इति अङ्गीकृत्य सा मृत्तिकां राशीकृत्य इष्टिकाः निर्माय समीचीनां भित्तिं निर्मितवती। एतावदेव न, कुतश्चित् उत्तमानि सस्यानि वृक्षान् च आनीय आरोपितवती अपि। एकदिनाभ्यन्तरे निर्मिताम् अपूर्वां वाटिकां दृष्टवतां ग्रामीणानां परमाश्चर्यम्!

प्रेताम्बा न मानवकुलोत्पन्ना इति तु एतावता सिद्धम्। एषा केन वा उपायेन गृहात् निष्कासनीया इति मल्लेशस्य महती समस्या जाता। प्रेताम्बा कस्यापि अहितम् अद्यावधि न आचरितवती। तथापि गृहे तस्याः स्थापनं मल्लेशः तदीया पत्नी वा न इच्छतः। प्रेताम्बायाः स्वरूपं ज्ञातवन्तः ग्रामीणाः मल्लेशस्य गृहस्य समीपम् अपि न आगच्छन्ति।

एकदा मल्लेशस्य कुटुम्बीयाः सर्वे गृहस्य पुरतः उपविष्टवन्तः आसन्। तदा एकः मार्जारः मूषकम् अनुसरन् धावन् आगतवान्। मूषकः भीत्या एकं बिलं प्राविशत्।

एतत् पश्यन् स्थितः मल्लेशस्य अल्पवयस्कः पुत्रः प्रेताम्बाम् उक्तवान्– "अम्ब! तं मूषकं बिलात् बहिः आनयतु। मार्जारः तं खादतु नाम" इति।

"तत्र कः क्लेशः। क्षणाभ्यन्तरे आनेष्यामि, पश्यतु" इति वदन्ती प्रेताम्बा मूषिकापेक्षया अपि लघुतरं रूपं प्राप्य बिलं प्रविष्टवती। 'एषः एव सुसमयः' इति भावयन् मल्लेशः झटिति शिलामृत्तिकादिभिः बिलद्वारं पूरितवान्। बिलात् बहिः किञ्चित्कालम् अग्निं ज्वालितवान् अपि। एतदनन्तरं कोऽपि प्रेताम्बां न दृष्टवान्।






अमेरिकादेशे अरिजोनाप्रदेशे स्थिताः 'ग्राण्ड् कानियन्' खाताः एव प्रपञ्चे महान्तः खाताः इति परिगण्यन्ते, येषां दैर्घ्यम्– ४-१३ मैल्, विस्तारः च २१७ मैल्, गभीरता च ७,००० द्वादशाङ्गुलानि। २२५ मिलियन् वर्षेभ्यः पूर्वं 'कोलोराडो' नद्याः प्रवाहेण एते खाताः निर्मिताः। वायुमण्डलस्य विपरिणामात् एतैः खातैः विचित्रं रूपं प्राप्तम् अस्ति।

सहारामरुभूमौ स्थितानां सिकतानां गभीरता कुत्रचित् अङ्गुलपरिमाणिका चेत् अन्यत्र कुत्रचित् ४०० द्वादशाङ्गुलपरिमाणिका!






## 'शरीरे दृश्यते रक्तम्!

अण्टार्कटिकाप्रदेशे निवसतां हिममीनानां शरीरे रक्तं स्फुटं दृश्यते। एतेषां रक्ते रक्तवर्णीयं हिमोग्लोबिन् एव न भवति, यच्च प्राणिनां शरीरे ९०% प्राणवायुं विविधभागान् प्रापयति।



## गजनिद्रा

गजाः प्रतिदिनं केवलं अष्ट घण्टाः यावत् निद्रां कुर्वन्ति।

# कठिनशब्दानां सान्दर्भिकाः अर्थाः

अङ्कः - Numeral
अनुनयः - Consoling fondly
अनुतापः - Sympathy
अनुवृत्तम् - Continued
अपत्यम् - Child (Son or daughter)
अर्जुनवृक्षः - A tree useful as timber
आपणः - Shop
उद्धृत्य - Having drawn(water)
उलूखलः - Stone mortar
कामना - Desire
कालक्षेपः - Pastime
खातः - Valley
चारणम् - Pasturing
चोदितवान् - Inspire
जीवच्छवः - Dead while alive
ज्या - Bow-string
तर्जनी - Index finger
तुन्दिलत्वम् - Potbelly
दोहनम् - Milking
द्वारशृङ्खला - Bolt
धारा - Edge (of an axe)
धार्ष्ट्यम् - Hardness
नीरसता - Boredom
नीराजनम् - Waving lights before an idol
परशुः - Axe
परीवर्तः - Change (Smaller denomination)
पिच्छम् - Feather
प्राकारः - Compound
भल्लातकम् - Cashewnut
भल्लूकः - Bear
माण्डलिकः - A chieftain
लीढवान् - Licked
वलयः - Bracelet
वित्तकोषः - Bank
वृकः - Wolf
सम्मार्जनम् - Sweeping
सिकता - Sand
सोरस्ताडम् - Weeping aloud
स्तन्यम् - Breast milk
स्थौल्यम् - Thickness
स्वागतप्रकोष्ठः - Drawing room
हलः - Plough

# चित्रशीर्षिका-स्पर्धा * पारितोषिकं ५०/- रूप्यकाणि

## विजितां शीर्षिकां अक्टोबर्-८८ मासे प्रकटयिष्यामः।





*उपरितनं चित्रद्वयं पश्यन्तु। *युक्तां शीर्षिकां परस्पर-सम्बन्धि-वाक्यद्वयेन लिखित्वा अगस्त्-२० दिनाङ्कतः पूर्वम् एव प्रेषयन्तु। *अनन्तरम् आगताः शीर्षिकाः न परिशीलयिष्यामः। *स्पर्धायां विजेता ५०/- रूप्यकात्मकं पारितोषिकं प्राप्स्यति। *शीर्षिकाः समपत्रे (पोस्ट्-कार्ड्) लेखनीयाः। तत्र अन्यः विषयः न लेखनीयः। *अधोनिर्दिष्ट-सङ्केताय शीर्षिकाः प्रेषणीयाः—

**चन्दमामा (संस्कृतम्)**

**७३/२, 'अक्षरम्' रङ्गनाथमार्गः, शङ्करपुरम्, बेङ्गलूरु-५६०००४**

---

**'जून्' मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः—**

प्रथमचित्रम् - **अक्षिसात्कृतं दृश्यं न चिरं तिष्ठेत्।**

द्वितीयचित्रम् - **यन्त्रेण गृहीतं चित्रं न कदापि नश्येत्!**

प्रेषिका - कुमारी के. आर्. शोलाव्या, १२-२-८२३/ए/१९ सन्तोषनगर्, मेहदीपट्टनम्, हैदराबाद-२८




Printed by B.V. REDDI at Prasad Process Private Ltd., 188 N.S.K. Salai, Madras 600 026 (India) and Published by B. VISHWANATHA REDDI on behalf of CHANDAMAMA PUBLICATIONS, Chandamama Buildings, Vadapalani, Madras 600 026 (India). Controlling Editor: NAGI REDDI.

# विपणिं गत्वा आगच्छाव

| | |
|---|---|
| उमेशः – प्रमोद! किञ्चित् विपणिं गत्वा आगच्छाव वा? | Pramod! Shall we go for a small shopping? |
| प्रमोदः – किमर्थम्? | Why? |
| उ – मया एकं युतकवस्त्रं क्रेतव्यम् अस्ति। | I would like to buy a piece of shirting. |
| प्र – क्रीणातु नाम। तदर्थं मम आगमनं किमर्थं भोः? | Ok. But why do you want me? |
| उ – वस्त्रचयनार्थं साहाय्यं कर्तुम्। भवान् आगच्छति वा न वा? | To help me in selection. Will you go with me or not? |
| प्र – नैव भोः, मम समयः नास्ति। | No my friend. I have no time. |
| उ – अर्धघण्टाभ्यन्तरे प्रत्यागन्तुं शक्यते भोः। | We could be back in half an hour. |
| प्र – तथापि न शक्यते। भवान् गत्वा आगच्छतु। | Still it is not possible. Please go ahead. |
| उ – मम लूनायानेन गत्वा आगच्छाव। विलम्बः सर्वथा न भवति। अस्तु वा? | We will be going on Luna, so it won't be late. Ok? |
| प्र – मित्र! अद्य मम समयः सर्वथा नास्ति। | I say, I have no time at all today. |
| उ – तादृशं महाकार्यं किम् अस्ति भवतः? | What is that important work you have, after all? |
| प्र – इदानीं कः समयः? चतुर्वादनं खलु? पादोनपञ्चवादने मया जयनगरे स्थातव्यम्। | What's the time now? See it is 4 o'clock. By 4.45 I have to be in Jayanagar. |
| उ – तर्हि एवं करवाव। विपणिं गत्वा वस्त्रं क्रीणीव। ततः अहं मम लूनायानेन भवन्तं जयनगरं प्रापयामि। अस्तु वा? | We will do this way then. We will go to the market, buy the cloth and then I will drop you in Jayanagar. Would it be all right? |
| प्र – मया आगन्तव्यम् एव वा? | You want me at any cost? |
| उ – तदर्थम् एव खलु एतावत् वदामि? उत्तिष्ठतु गच्छाव। | That's what I am telling you. Come on, let's get going. |

म धुर पल की
मधु मुस्कान




ादि कीमदार
ॉकलेट एकलेयर्स
ी शान

न्यूट्रीन
के स्वाभाविक स्त्रा

यादा दूध, ज्यादा मक्खन,
यादा चॉकलेट.

ूट्रीन - भारत में सबसे ज्यादा
बिकनेवाला चॉकलेट

Ask for
nutrine
Chocolate
Eclairs

